


महामहोपाध्यायपण्डितसुधाकरद्विवेदिरचिता

# गणकतरङ्गिणी

तदात्मजेन

पद्माकरद्विवेदिना सम्पादिता ।

# गणकतरङ्गिणी ।

काशिकराजकीयप्रधानसंस्कृतपाठशालीयप्रधानगणितशास्त्रा-
ध्यापकमहामहोपाध्यायसुधाकरद्विवेदिनिर्मिता ।

तदात्मजेन
काशिकराजकीयप्रधानसंस्कृतपाठशालीयगणितशास्त्राध्यापकेन
ज्यौतिषाचार्यपद्माकरद्विवेदिना सम्पादिता प्रकाशिता च

काश्याम् ।

सन् १९३३ ईस्वी ।

# GANAKA TARANGINI

OR

## LIVES OF HINDU ASTRONOMERS

BY

MAHAMAHOPADHYAYA SUDHAKARA DVIVEDI,
PROFESSOR OF MATHEMATICS AND ASTRONOMY, SANSKRIT COLLEGE, BENARES.

EDITED BY HIS SON

PADMAKARA DVIVEDI

PROFESSOR OF MATHEMATICS AND ASTRONOMY,
GOVERNMENT SANSKRIT COLLEGE BENARES.

*BENARES.*



PRINTED BY B. K. SHASTRI AT THE JYOTISH
PRAKASH PRESS, BISESARGANJ, BENARES CITY.
1933.

Price 1/4/-

# गणकतरङ्गिणी ।



काशिकराजकीयप्रधानसंस्कृतपाठशालीयप्रधानगणितशास्त्रा-
ध्यापकमहामहोपाध्यायसुधाकरद्विवेदिनिर्मिता ।

तदात्मजेन
काशिकराजकीयप्रधानसंस्कृतपाठशालीयगणितशास्त्राध्यापकेन
ज्यौतिषाचार्यपद्माकरद्विवेदिना सम्पादिता प्रकाशिता च

**काश्याम् ।**



सन् १९३३ ईस्वी ।



# GANAKA TARANGINI

OR

## LIVES OF HINDU ASTRONOMERS

BY


MAHAMAHOPADHYAYA SUDHAKARA DVIVEDI,

PROFESSOR OF MATHEMATICS AND ASTRONOMY, SANSKRIT COLLEGE, BENARES.

EDITED BY HIS SON

PADMAKARA DVIVEDI

PROFESSOR OF MATHEMATICS AND ASTRONOMY,
GOVERNMENT SANSKRIT COLLEGE BENARES.




**BENARES.**

---



PRINTED BY B. K. SHASTRI AT THE JYOTISH
PRAKASH PRESS, BISESARGANJ, BENARES CITY.
1933.



Price 1/4/-






भारतवर्षे प्राचीनेतिहासानां यादृशी दुर्दशा सा च सर्वत्रैव विदिता तत्रातिश्रमेण कतिपयानां गणकानां समयादिकं निर्णीयात्र मया निवेशितम् ।

अत्र येषां गणकानां नामानि तत्कृतग्रन्थाश्च ये ते सर्वे पृथगनुक्रमणिकायां च प्रदर्शिताः । तत्रापि येषां समयादिकमत्र स्फुटं तन्नामाग्रे ❀ इति साङ्केतिकं चिह्नं न्यासि । गणकानां वर्णने च यावच्छक्यं सर्वेषां द्रागवबोधाय कविवागाडम्बरं विहाय सरलवाक्यसंयोजना च कृता मया । अत्र च येषां गणकानां केवलं नामैव तेषां समयादिज्ञाने भारतवर्षीयगणकानामितिहासः पूर्णप्राय एवातो यावच्छक्यमितिहासतत्त्वविद्भिर्विद्वद्भिर्यत्नतस्तत्समयादिकमन्वेषणीयं मन्निर्णीतं च शोधनीयमिति तान् सुजनान्मुहुरर्थये ।

संवत् १९४९<br>
आश्विनशुक्लषष्ठ्यां कुजे }

सुधाकरद्विवेदी ।






भारतवर्षे प्राचीनेतिहासानां यादृशी दुर्दशा सा च सर्वत्रैव विदिता तत्रातिश्रमेण कतिपयानां गणकानां समयादिकं निर्णीयात्र मया निवेशितम् ।

अत्र येषां गणकानां नामानि तत्कृतग्रन्थाश्च ये ते सर्वे पृथगनुक्रमणिकायां च प्रदर्शिताः । तत्रापि येषां समयादिकमत्र स्फुटं तन्नामाग्रे ❀ इति साङ्केतिकं चिह्नं न्यासि । गणकानां वर्णने च यावच्छक्यं सर्वेषां द्रागवबोधाय कविवागाडम्बरं विहाय सरलवाक्यसंयोजना च कृता मया । अत्र च येषां गणकानां केवलं नामैव तेषां समयादिज्ञाने भारतवर्षीयगणकानामितिहासः पूर्णप्राय एवातो यावच्छक्यमितिहासतत्त्वविद्भिर्विद्वद्भिर्यत्नतस्तत्समयादिकमन्वेषणीयं मन्निर्णीतं च शोधनीयमिति तान् सुजनान्मुहुरर्थये ।

संवत् १६४९
आश्विनशुक्लषष्ठ्यां कुजे

सुधाकरद्विवेदी ।

श्रीजानकीवल्लभो विजयते ।

# सम्पादकीयभूमिका

विदितमेवास्ति तत्र भवतां प्राचीनार्वाचीनगणकेतिहासरसिकानां यदियं गणकतरङ्गिणी विविधविषयसमालोचनासारगर्भिता पूज्यतातचरणैः पुरा मुद्रिताऽपि चिराद्दुर्लभतराऽऽसीदित्याकलय्य, विशेषतः काशिकराजकीयप्रधानपाठशालीयपरीक्षायामस्या निर्धारणतया मया कतिपयावश्यकटिप्पणीभिरलङ्कृत्य प्रकाशिता ।

मन्ये च तत्र मद्बुद्धिभ्रमजनितकण्टकादिदोषान् तत्त्वग्राहका विद्वज्जनवृन्दाः स्वीयान् स्वीकृत्य सम्मार्जयिष्यन्तीति तान् मुहुरर्थये ।

खजुरी
बनारस क्यान्ट
संवत् १९९०
कार्तिककृष्णत्रयोदश्यां कुजे

पद्माकरद्विवेदी ।

## शुद्धिपत्रम् ।



| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ७ | रविभागणाः | रविभगणाः |
| ६ | २६ | ध्यायस्य | अध्यायस्य |
| ११ | १३ | प्रथमारुढ़ाः | पथमारुढ़ाः |
| ११ | १८ | पतिन | पतिना |
| १३ | २७ | समय | समये |
| २५ | ७ | सभ्भवा | सम्भवा |
| २६ | ६ | य सदा | यः सदा |
| २८ | ३ | जमिनेः | जैमिनेः |
| ३० | २९ | प्राकाश्य | प्राकाश्यं |
| ३० | ३१ | व्याधात् | व्यधात् |
| ३१ | १५ | भाजराज | भोजराज |
| ३२ | २७ | भगतस्य | भागतस्य |
| ३४ | ४ | कृतरुप | कृतिरुप |
| ३५ | ७ | ऐव | एव |
| ३८ | १० | बीजया | बीजयो |
| ४३ | १७ | नर्णीतो | निर्णीतो |
| ४६ | १५ | यन्थकृता | ग्रन्थकृता |
| ४६ | २८ | Confoundep | Confounded |
| ४९ | २६ | ग्रन्थस्थ | ग्रन्थस्य |
| ५१ | २२ | सुधाब्धा | सुधाब्धौ |
| ५२ | २८ | ज्योतिविदां | ज्योतिर्विदां |
| ५३ | ७ | तीरवति | तीरवर्ति |
| ५७ | २५ | सम | समः |
| ६७ | २७ | ज्योतिविद | ज्योविर्विंद |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७१ | २ | त्यद्भत | त्यद्भुत |
| ७९ | ८ | भुति | श्रुति |
| ८२ | १६ | खिलशास्त्र | खिलशास्त्र |
| ८३ | २० | दवज्ञ | दैवज्ञ |
| ८३ | १४ | चत्रायाभ्यां | चत्राभ्यां |
| ८४ | २६ | चित्रिविक्रम | चित्रिविक्रम |
| ८९ | २६ | तत्रातौ | तत्रादौ |
| ९५ | ६ | तत्रातौ | तत्रादौ |
| ९८ | १० | लाककरः | लाकरः |
| ९९ | २३ | रयावि | रयोवि |
| १०० | १२ | सद्द्विजौ | सद्द्विजौ |
| १०१ | २४ | ध्रवका | ध्रुवकाः |
| १०५ | ११ | समुत्तादितवान् | समुत्पादितवान् |
| १०५ | २८ | पूर्व | पूर्वं |
| १०६ | २ | सम्बन्धिन | सम्बन्धिनः |
| १०६ | ९ | तेत | तेने |
| १०६ | १९ | प्रवाणो | प्रवीणो |
| १०९ | १७ | चााप | चापि |
| ११२ | २४ | यागान्तर | योगान्तर |
| ११८ | २५ | पाठवस्य | पाठकस्य |
| १२१ | ६ | निधनि | निधन |

## गणकतरङ्गिण्यामनुक्रमणिका ।



# अथ गणकतरङ्गिणी ।

जयतो जयतोषकोशरूपौ चरणाववधपतेः सुधाकरः ।
तनुतेऽतनुतेजसा ययोस्तौ गणका गणकतरङ्गिणीमिमाम् ॥

अस्ति सिद्धान्तहोरासंहितारूपं स्कन्धत्रयात्मकमष्टादशमहर्षिप्रणीतं ज्योतिःशास्त्रं वेदचक्षूरूपं परम्परातः प्रसिद्धम् । अष्टादशमहर्षयश्च ज्योतिःशास्त्रप्रतिपादका ये तेषां नामानि प्रकाशितानि कश्यपादिभिः ।

यथा कश्यपः—

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्ग्गो मरीचिर्मनुरङ्गिराः ॥
लोमशः पौलिशश्चैव च्यवनो यवनो भृगुः ।
शौनकोऽष्टादशाश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः ॥

पराशरश्च

विश्वसृड्नारदो व्यासो वसिष्ठोऽत्रिः पराशरः ।
लोमशो यवनः सूर्यश्च्यवनः कश्यपो भृगुः ॥
पुलस्त्यो मनुराचार्यः पौलिशः शौनकोऽङ्गिराः ।
गर्ग्गो मरीचिरित्येते ज्ञेया ज्योतिःप्रवर्त्तकाः ॥

अत्र पुलस्त्यपौलिशयोर्भेदेन पराशरेण ज्योतिःशास्त्रप्रवर्त्तका एकोनविंशतिसंख्याका आचार्या अभिहिताः । केचनाष्टादशाचार्यानुरोधेन पुलस्त्यो मनुविशेषणपर इति वदन्ति । नारदेन तु सूर्यं हित्वा सप्तदशाचार्या एव स्वसंहितायां प्रकाशिताः । तत्रापि ब्रह्माचार्यो वसिष्ठोऽत्रिरित्यादौ ब्रह्मसूर्यौ वसिष्ठोऽत्रिरित्यनेके पाठं वदन्ति ।

अथाहो एते संहिताकारा महात्मनो लगधस्य न कुर्वन्ति चर्चाम् । येन महात्मना वेदाङ्गमूलरूपं ज्यौतिषं पञ्चवर्षयुगवर्णनपरं विलक्षणं चक्रे ।

सूर्येण मयारुणकृते ब्रह्मणा नारदाय व्यासेन स्वशिष्याय वसिष्ठेन माण्डव्यवामदेवाभ्यां पराशरेण मैत्रेयाय पुलस्त्याचार्यगर्गात्रिभिश्चैवं स्वस्वशिष्येभ्यो ज्योतिःशास्त्रविशेषाः प्रतिपादिताः ।

तथा चाह पराशरः

नारदाय यथा ब्रह्मा शौनकाय सुधाकरः ।
माण्डव्यवामदेवाभ्यां वसिष्ठो यत्पुरातनम् ॥

नारायणो वसिष्ठाय रामेशायाऽपि चोक्तवान् ।
व्यासः शिष्याय सूर्योऽपि मयारुणकृते स्फुटम् ॥
पुलस्त्याचार्यगर्गौत्रिरोमकादिभिरीरितम् ।
विवस्वता महर्षीणां स्वयमेव युगे युगे ॥
मैत्रेयाय मयाप्युक्तं गुह्यमध्यात्मसंज्ञकम् ।
शास्त्रमाद्यं तदेवेदं लोके यच्चातिदुर्लभम् ॥

अष्टादशाचार्याणां मध्ये पूर्वं लोमशं वदता पराशरेणाऽत्र पुलस्त्याचार्यगर्गात्रिरोमकादिभिरीरितमित्यत्र रोमकपदमुक्तं तेन लोमशरोमकशब्दावेकस्यैवाचार्यस्य बोधकाविति प्रतीयते ।

अथैतेषामाचार्याणां समयादिनिरूपणं तत्तद्रचितसिद्धान्तानामलाभेऽतीवकाठिन्यमतोऽस्माभिस्तावज्ज्यौतिषसिद्धान्तग्रन्थकाराणां पुरुषाणामुत्तरोत्तरं खण्डनप्रतिखण्डनद्वारेण बहुविशेषरचयितॄणां यावच्छक्यं तत्तद्ग्रन्थमर्मस्थलानां सम्यगवलोकनेन समयादिकं निरूप्यते ।

## आर्यभटः । ३९८

अस्य भारतवर्षे ज्यौतिषसिद्धान्तमूलरूपस्य जन्मशको वसुनवाग्निमितः ३९८ । अयं रूपद्विवेदमिते ४२१ शके त्रयोविंशतिवर्षसमवयःकाले ज्यौतिषसिद्धान्तं संप्रति आर्यभटीयतन्त्रनाम्ना प्रसिद्धमकार्षीत् । अस्य नाम्नि टकारद्वयं नेति यद्यपि तत्तन्त्रस्य गणितपादप्रथमश्लोकेन "ब्रह्मकुशशिबुधभृगुरविकुजगुरुकोणभगणान् नमस्कृत्य । आर्यभटस्त्विह निगदति कुसुमपुरेऽभ्यर्चितं ज्ञान"मित्यनेनैव सिध्यति टकारद्वये छन्दोभङ्गदोषात् । तथापि * डाक्टरभाऊदाजीनाम्नाऽत्र बहुविस्तरतो विलिखितं तच्च मन्मतेऽनावश्यकम् । नाम्नि विद्वांसश्छन्दोभङ्गभिया बहुत्र भटस्थाने भट्टस्य भट्टस्थाने भटस्य च प्रयोगं कुर्वन्ति भटभट्टयोर्नाम्नि विशेषाऽभावात् । प्राचीनज्योतिर्विदामयमेव शकाब्दानपहाय स्वजन्मवर्षवर्णनं कलियुगगतवर्षतःकृतवान् ।

तद्यथा

कालक्रियापादस्य दशमः श्लोकः ।

"षष्ट्यब्दानां षष्टिर्यदा व्यतीतास्त्रयश्च युगपादाः ।
त्र्यधिका विंशतिरब्दास्तदेह मम जन्मनोऽतीताः" ॥

* See "The Literary Remains of Dr. Bhau Dâji."



आर्यभटीये कुत्रापि शकचर्चा न कृता ग्रन्थकृता तेनैतद्देशे तस्मिन् समये प्रायः शकप्रचारो नासीदित्यनुमीयते यथा यूरपदेशीयराजतः पूर्वं भारतवर्षे ख्रीष्टशकचर्चाऽभावः ।

ग्रन्थादौ विलक्षणसङ्केतेन * दशभिर्गीतिकाभिर्ग्रहगणितोपयोगिन्यो ग्रहमन्दोच्चशीघ्रोच्च † पातभगणमन्दशीघ्रपरिधिज्यार्द्धमन्वादिसंख्याः पठिताः । तत्र केवलं संख्यासङ्केत एव न वैलक्षण्यं किन्तु संस्कृतव्याकरणविरुद्धः पदप्रयोगश्च । यथा गीतिकापादस्य प्रथमसूत्रे "युगरविभगणाः ख्युघृ शशिचयगियिङुशुछ्लृ" इत्यादौ शशि पदेन शशिनः, शनिपदेन शनेः, गुरुपदेन गुरोः कुजपदेन कुजस्य च ग्रहणं भवति । एवं समग्रदशगीतिकासु पदानां वैलक्षण्यमुपलभ्यते । एतद्वैलक्षण्यं संख्यादिसंकेतरूपं गीतिकापादे ग्रहाणां भगणादिपाठ एव वर्त्तते ततः परं सर्वत्र प्राचीनपरम्पराऽऽगतेन संकेतेन सर्वाः संख्याः संस्कृतव्याकरणानुसारेण पदप्रयोगाश्च कृता ग्रन्थकृता ।

अहो अतिपरिश्रमेण परदेशीयपण्डितस्य देवतारूपस्य कृपालवेन लब्धा ग्रहगणितोपयोगिनो भगणादयः सर्वंजनप्रसिद्धा मा भूयासुर्मन्द्रक्तशिष्या एव तान् जानन्त्विति धिया सुधियाऽऽर्यभटेन कृतं नवीनसंकेतकल्पनमिति मन्मतिकल्पनं किमु न युक्तम् ? ।

गीतिकापादे प्रथममेतत्संकेतकल्पनं च यथा

"वर्गाक्षराणि वर्गेऽवर्गेऽवर्गाक्षराणि कात् ङ्मौ यः ।
खद्विनवके स्वरा नव वर्गेऽवर्गे नवान्त्यवर्गे वा ॥

एकशतायुतादिवर्गस्थानानि तत्र ककारादिमकारान्तानि वर्गाक्षराणि स्थाप्यानि । एवमवर्गस्थानानि दशसहस्रलक्षादिसमस्थानानि तत्र यकारादिहकारान्तान्यवर्गाक्षराणि स्थाप्यानि । संख्या च कात् ककाराद्बोध्या । यथा क=१ । ख=२ । ग=३ । घ=४ । ङ=५ । च=६ । छ=७ । ज=८ । झ=९ । ञ=१० । ट=११ । ठ=१२ । ड=१३ । ढ=१४ । ण=१५ । त=१६ । थ=१७ । द=१८ ध=१९ । न=२० । प=२१ । फ=२२ ब=२३ भ=२४ । म=२५ । यश्च ङ्मौ ङकारमकारयोः पञ्चपञ्चविंशतिसंख्ययोर्योगेन समः । अर्थात् य=३० । एवं र=४० । ल=५० । व=६० । श=७० । ष=८० ।

* आर्यापूर्वार्द्धसममुत्तरार्द्धं च कृत्वा यच्छन्दः सा गीतिका कथ्यते छन्दोज्ञैः ।

† अत्र चन्द्रपातस्यैव भगणाः सन्ति कुजादीनां पाताश्च स्थिरा एव पठितास्तेषां खण्डनं च तेन हेतुना ब्रह्मगुप्तेन स्वसिद्धान्ते दूषणाध्यायस्याष्टमश्लोकेन कृतम् ।

स=९० । ह=१०० ॥ नवस्वराश्च वर्गाक्षरेषु तथाऽवर्गाक्षरेषु मिश्रिता अष्टादशस्थानप्रदर्शकाः । यथा

क् + अ = क = १
क् + इ = कि = १००
क् + उ = कु = १००००
क् + ऋ = कृ = १००००००
क् + लृ = कॢ = १००००००००
क् + ए = के = १००००००००००
क् + ऐ = कै = १००००००००००००
क् + ओ = को = १००००००००००००००
क् + औ = कौ = १००००००००००००००००

एवं ख् + अ = ख = २
ख् + इ = खि = २००
ख् + उ = खु = २००००

एवमग्रेऽपि बोध्याः ।

एवं य् + अ = य = ३०
य + इ = यि = ३०००
य् + उ = यु = ३०००००

इत्यादयः ।

एवं र् + अ = र = ४०
र् + इ = रि = ४०००
र् + उ = रु = ४०००००

इत्यादयः ।

अत्र ह्रस्वदीर्घस्वरयोर्योगेन न संख्याभेदः । यथा कि वा की इति द्वयेनापि शतं गृह्यते । स्वरस्य प्रत्येकसंयुक्ताक्षरेण सम्बन्धो भवति ।

यथा युगरविभगणाः ख्युघृ इत्यत्र ख्यु इत्यत्र-उकारस्य खयोर्द्वयोः सम्बन्धस्तेन

खु = २००००
यु = ३०००००
घृ = ४००००००

---

४३२००००



यवनैश्च (The Greek

| | | |
|---|---|---|
| | α′ = | 1 |
| | β′ = | 2 |
| | γ′ = | 3 |
| | δ′ = | 4 |
| | ε′ = | 5 |
| (Stigma) | = ϛ = | 6 |
| | ζ′ = | 7 |
| | η′ = | 8 |
| | θ′ = | 9 |
| | ι′ = | 10 |
| | ια′ = | 11 |
| | ιβ′ = | 12 |
| | ιγ′ = | 13 |
| | ιδ′ = | 14 |
| | ιε′ = | 15 |
| | ις′ = | 16 |
| | ιζ′ = | 17 |
| | ιη′ = | 18 |
| | ιθ′ = | 19 |
| | κ′ = | 20 |
| | λ′ = | 30 |
| | μ′ = | 40 |
| | ν′ = | 50 |
| | ξ′ = | 60 |
| | ο′ = | 70 |
| | π′ = | 80 |
| (Koppa) | = ϙ′ = | 90 |
| | ρ′ = | 100 |
| | σ′ = | 200 |
| | τ′ = | 300 |
| | υ′ = | 400 |
| | φ′ = | 500 |
| | χ′ = | 600 |
| | ψ′ = | 700 |
| | ω′ = | 800 |
| (Sampi) | = ϡ = | 900 |
| | ͵α = | 1000 |
| | ͵β = | 2000 |
| | ͵γ = | 3000 |
| | ͵ι = | 10000 |

अक्षरैः स्वरयुक्तैस्तथैव प्रायः संख्याः प्रकाश्यन्ते यथाऽऽर्यभटेन प्रकाशिताः । एकस्याः कल्पनाया अन्या कल्पना निःसरतीत्यर्थः । अत्र आर्यभटेन कस्माच्चिद्यवनपण्डिताद्वर्गणादयः प्राप्तास्ते च स्वाभ्यस्तसङ्केतेनैव संस्कृताक्षरैर्गोपनार्थं प्रकाशिता इत्यवबुध्यते । आर्यभटेन कुसुमपुरे संप्रति पटनानामतः प्रसिद्धे नगरे स्वतन्त्रं व्यरचीति तत्कृतमङ्गलेन गणितपादारम्भकेण ज्ञायते ।

आर्यभटेन स्वकल्पिता वा यवनैः प्राप्ता विशेषा ये स्वतन्त्रे प्रकाशितास्ते भारतवर्षे प्रायोऽपूर्वा विचारार्हाश्च ।

यथा । गणितपादे "एकं दश च शतं चे"त्यादिना संख्यास्थानसंज्ञामुक्त्वा योगान्तरगुणनभजनानां प्रकारो न ततः परं वर्गघनलक्षणकथनं ३ श्लोकेन तत्रापि संवर्ग*पदं घातार्थबोधकं सम्प्रतिप्रचलितघातवाचिशब्दतो भिन्नम् ।

४-५ श्लोकाभ्यां वर्गघनमूलानयनं चैतत्सर्वं चार्यभटकाले योगान्तराद्यानयनं प्रसिद्धं वर्गवर्गमूलाद्यानयनं चाप्रसिद्धमिति प्रकाशयति ।

---

* सम्प्रति प्रचलितसूर्यसिद्धान्तस्पष्टाधिकारेऽपि चापानयने चैकत्र संवर्गपदेन घातो गृह्यते ।

पूर्वार्द्धे फलस्थाने फलशरीरमिति नूतनमेव पदम् ।

६ श्लोकस्य पूर्वार्द्धे फलस्थाने फलशरीरमिति नूतनमेव पदम् ।

६ श्लोकस्य पूर्वार्द्धे फलस्थाने फलशरीरमिति नूतनमेव पदम् । तस्य षड*स्रीति संज्ञाऽ
उत्तरार्द्धेन यस्य घनक्षेत्रस्य घनफलं साधयति तस्य षडस्रिपदेन सर्वतस्त्रिकोणं क्षेत्र-
पूर्वा । अत्र परमेश्वरेण भटदीपिकायां षडस्रिपदेन सर्वतस्त्रिकोणं क्षेत्र-
मर्थात् त्रिभुजाधारं सूचीक्षेत्रं गृहीतम् । ऊर्ध्वभुजेन च क्षेत्रमध्योच्छ्राय-
स्ततो मध्योच्छ्रायत्रिभुजफलघाताद्धं घनफलं सूचीक्षेत्रस्योक्तं तत्त्वयुक्तमेव
सूचीक्षेत्रस्य वास्तवं घनफलं च त्रिभुजफलमध्योच्छ्रायघातत्र्यंशसमं भवति।
यदि परमेश्वरोक्तं तथ्यं तर्ह्यार्यभटसाधनमशुद्धमेव। एवं ७ † श्लोकस्य पूर्वा-
र्द्धेन वास्तवं वृत्तफलं संविधाय तदुत्तरार्द्धेन "तत्फलं स्वमूलेन गुणितं वृत्त-
घनफलं भवति" इति विलक्षणमानयनमशुद्धमेवेति प्रतिपादितमाचार्येण।
एवमत्र पादे प्रायोऽपूर्वा संज्ञा क्षेत्रभुजादीनां टीकाकारव्याख्यातः सिध्यति।
टीकाकाराणां व्याख्या च सर्वथा न विश्वासयोग्येति मन्मतम् । अयुतद्वय-
व्यासे परिधिः = ८ × १०४ + ६२००० = ८३२ + ६२००० = ६२८३२ अयं
वास्तव एव दशमश्लोकेन "चतुरधिकं शतमष्टगुणं द्वाषष्टिस्तथा सहस्रा-
णाम् । अयुतद्वयविष्कम्भस्यासन्नो वृत्तपरिणाहः" इत्यनेन उक्तः ।
एवमत्र पादे संप्रति प्रचलितपाटीगणितस्यानेकानि कठिनानि सुगमानि च
श्रेढीफलभिन्नसमच्छेदाद्यानयनानि गणितविदामस्यार्यभटस्य सम्यक्पाण्डि-
त्यविवेचने भ्रमोत्पादकानि सन्ति । प्रकाराणां दर्शनेनाऽऽर्यभटः स्वयं तेषां
कर्त्ता नेति मम निःसंशयं भाति ।

पृथिव्या अक्षोपरिभ्रमणमिति यद्यपि लिखितमत्र तथाऽपि टीका-
कारैरन्यथा व्याख्यातं मिथ्याज्ञानपरम् । कालक्रियापादे युगस्य समभाग-
द्वयं कृत्वा पूर्वार्द्धस्योत्सर्पिणी द्वितीयार्द्धस्यावसर्पिणीति संज्ञा जैनमता-

---

* In Dr. H. Kern's edition. षडश्रिरिति पाठः स च वैदिकप्रयोगः शतपथब्राह्मणादौ दृश्यते ज्यौतिषग्रन्थेषु नोपलभ्यते । तथा छन्दोभङ्गभयेन ग्रन्थादौ परमेश्वरेण समासविधिना परमादीश्वर इति नाम लिखितं वस्तुतस्तन्नाम परमेश्वर एव । डाक्टरकर्णसाहिबेन तु भ्रमात्परमादीश्वर इति तन्नामाऽलेखीति सर्वत्राध्यायसमाप्तिलेखेन "इति पारमेश्वरिकायां" भटदीपिकायांमित्यादिना स्फुटमिति मदुक्तं सुधीभिर्भृशं विचिन्त्यम् । एवं तन्मुद्रितबृहत्संहितोयाः ५३ ध्यायस्य २८ श्लोकेऽष्टाश्रिः पाठोऽपि वैदिकः ।

† समपरिणाहस्यार्द्धं विष्कम्भार्द्धहतमेव वृत्तफलम् ।
तन्निजमूलेन हतं घनगोलफलं निरवशेषम् ॥



नुसारतः कृता तथा युगस्य समभागत्रयं कृत्वाऽद्यन्तयोर्दुःसमा मध्यस्य च सुसमा संज्ञा चेति च प्रतिपादिता । अत्र व्याख्याकारैरिन्दूचादीनां कालभेदेन गतेर्भेदो भवतीत्याचार्यः कथयतीति व्याख्यातं मन्मते तन्न तथ्यं प्रसङ्गानुसारतोऽत्र ग्रहभगणादौ भेदप्रदर्शनानौचित्यात् । इन्दूचस्यैव पदस्य प्रयोगकरणे प्रमाणाभावाच्च । मन्मते तु "उत्सर्पिणी युगार्द्धं पश्चादवसर्पिणी युगार्द्धं च । मध्ये युगस्य सुसमाऽऽदावन्ते दुःसमाग्न्यंशात्" इति पाठः साधुः स च लेखकाध्यापकाध्येतृदोषैरन्यथा जातः । (see Dr Kern's edition) कालक्रियापादस्य षोडशश्लोकेन सर्वे ग्रहा भूमिं परितो भ्रमन्तीति प्रतिपादितमाचार्येण तच्च यथा लोकैरवलोक्यते तथा लौकिकबुद्ध्या लिखितमित्यनुमीयते । कालक्रियापादे छेद्यकविधिना स्पष्टीकरणयुक्तिर्विस्तरतो वर्णिता बुधशुक्रयोश्च विलक्षणसंस्कारेण स्फुटीकरणमुक्तम् । गोलपादे मेर्वादिस्थितिवर्णनमक्षक्षेत्रानुपातेन लम्बाक्षज्यादिसाधनं परमक्रान्तिसंज्ञा च काष्ठान्त्यमित्युक्तम् ।

यद्यपि डाक्टरकर्णसाहिबमुद्रितमार्यभटीय*तन्त्रमष्टाधिकशतार्यारूपं परमेश्वरकृतभटदीपिकाख्यव्याख्यासहितं सम्यगार्यभटमतं न प्रकाशयति तथापि तस्मादेव पुस्तकात् स्वधिया विविच्य सर्वमिदमार्यभटस्य विषयेऽस्माभिर्लिखितमन्यपुस्तकानामलाभात् । बुद्धिमद्भिर्ज्योतिर्विद्भिरितिहासरसिकैश्च यत्नतः पुस्तकान्तरमवाप्य तत्सर्वं मन्मतं परीक्ष्यम् । यच्च वृद्धार्यभटतन्त्रं प्रसिद्धं तच्च केन चिदाधुनिकेन सम्प्रति प्रचलितसूर्यसिद्धान्तानुसारं कलियुगादेः पराशरमतमिश्रितं नूतनं कृतम् । अत्र केरलासङ्केतेन दक्षिणभागतः सर्वाः संख्याः प्रकाशिताः सन्ति । यथा क ख = १२ ।

---

* ब्रह्मगुप्तसिद्धान्ते एकादशाध्यायस्याष्टमश्लोके "आर्याष्टशते पाता भ्रमन्ति दशगीतिके स्थिराः पठिताः । मुक्त्वेन्दुपातमपमण्डले भ्रमन्ति स्थिरा नातः" इत्यत्र—अष्टाधिक शतमित्यष्टशतमिति व्याख्येयम् । अन्यथा शताष्टके तु अष्टशतानि इति बहुवचनान्तः पाठो युक्तो भवेत् ।

† केरलमतीयाश्च

क = १ । ख = २ । ग = ३ । घ = ४ । ङ = ५ ।

च = ६ । छ = ७ । ज = ८ । झ = ९ । ञ = ० ।

ट = १ । ठ = २ । ड = ३ । ढ = ४ । ण = ५ ।

त = ६ । थ = ७ । द = ८ । ध = ९ । न = ०

## लल्लः । ४२१

आर्यभटीयतन्त्रटीकाभटदीपिका-
शाम्बस्य पौत्रो भट्टत्रिविक्रमस्य तनय आर्यभटीयतन्त्रटीकाभटदीपिका- ... भारतवर्षे पौरुषग्रन्थेषु
कारपरमेश्वरमतानुसारेणाऽऽर्यभटस्य शिष्यश्चासीत् । भारतवर्षे पौरुषग्रन्थेषु
कारपरमेश्वरमतानुसारेणाऽऽर्यभटस्य सम्यग्ज्यौतिषसिद्धान्तं प्राकाशयत्तथापि
यद्यप्यार्यभटतन्त्रमेव स्वातन्त्र्येण सम्यग्ज्यौतिषसिद्धान्तं प्राकाशयत्तथापि
पठनपाठनयोरयमध्यायक्रमं यथावन्निबद्ध्य बहुत्र सिद्धान्तप्रकारान् विशदी-
पठनपाठनयोरयमध्यायक्रमं यथावन्निबद्ध्य शिष्यधीवृद्धिदमकार्षीत् ।
कृत्य त्रिस्कन्धविद्याकुशलैकमल्लो लल्लोऽयमादितन्त्रं शिष्यधीवृद्धिदमकार्षीत् ।
इदमेव तन्त्रं समाधीत्य जातबोधेन भास्करेणैतत्प्रकारनिकरमनुसृत्य सिद्धा-
न्तशिरोमणिरकारि यत्र वृत्तफलं परिधिगुणं पृष्ठफलं न भवति । तयोत्क्रम-
ज्यया वलनं दृक्कर्म च न समीचीनम् । नित्यं रविगतिलिप्तासमासुभिः
सहितो भाहः सावनाहो नाहो स्फुटः । स्वीयचराद्धासवो यत्र विषये निरक्ष-
विषयोदयासुसमा यस्य राशेरुत्पद्यन्ते तत्र स राशिः सदा न दृश्यः । ग्रह-
शीघ्रगतिफलं न विमलम् । यत्र षट्षष्टिः सदला पललवास्तत्र धनुर्नक्रश्चेति
राशिद्वयं यत्र च पञ्चाद्र्यस्तत्र वृश्चिकचतुष्टयं च सततमदृश्यं नेत्यादि
खण्डनमाडम्बरेण प्रतिपादितं बुद्धिविभवेन ।

यद्यपि भास्करकृतानि खण्डनानि समीचीनानि तथाप्यत्र लल्ल-
सिद्धान्त आर्यभटादितन्त्रेभ्यो बहवो विशेषाः शोभन्ते । मृदूच्चरहितो
मध्यो मन्दकेन्द्रं तस्मान्मन्दफलं साध्यं तथा मध्येनैवोनं शीघ्रोच्चं
शीघ्रकेन्द्रं ततः शीघ्रफलं साध्यम् । सम्पूर्णाभ्यां मृदुचलफलाभ्यां संस्कृतौ
मध्यौ बुधशुक्रौ स्फुटौ भवतस्तत्रापि स्फुटशुक्रो रवेः परमेण मन्दफलेन
मध्यौ बुधशुक्रौ स्फुटौ भवतस्तत्रापि स्फुटशुक्रो तथा सूर्योच्चेन रहितं बुधशी-
दलीकृतेन हीनोऽतिस्फुटः शुक्रः स्यादिति तथा सूर्योच्चेन रहितं बुधशी-
घ्रोच्चं रविकेन्द्रं प्रकल्प्य तस्माद्रविमन्दफलमागच्छेत्तेनार्कवत्पूर्वानीतः
स्पष्टकुजः संस्कार्यस्तदाऽतिपरिस्फुटः कुजः स्यादिति स्पष्टाधिकारस्य
३६–३७ श्लोकाभ्यां "केचिद्वदन्ति बुधशुक्रपरिस्फुटत्वं मध्यान्मृदूच्च-
रहितान्मृदुना फलेन । शीघ्रोच्चमध्यरहिताच्चलसंज्ञितेन संसाधितेन सकलेन
सक्रुद्धिदध्यात् ॥ भानोः फलेन परमेण दलीकृतेन स्पष्टो भृगुर्वि

---

प = १ । फ = २ । ब = ३ । भ = ४ । म = ५ ।

य = १ । र = २ । ल = ३ । व = ४ । श = ५ । ष = ६ । स = ७ । ह = ८ ।

अ = आ = इ = ई = ऋ = ॠ = ऌ = ॡ = ए = ऐ = ओ = औ = ० ।

इति सङ्केतेन संख्याः प्रकाशयन्ति ॥



रहितोऽतिपरिस्फुटः स्यात् । सूर्योच्चवर्जितशशाङ्कजशीघ्रतुङ्गाज्जातेन भास्कर-
फलेन कुजोऽर्कवच्चे" त्याभ्यां बुधशुक्रयोः कुजस्य च विलक्षणा स्पष्टी-
क्रियाऽभिहिता ग्रन्थकृता । इदं कस्य मतमिति न ज्ञायते ।

शिष्यधीवृद्धिदस्य गणिताध्याये–मध्यमाधिकारः, स्पष्टाधिकारः, त्रिप्र-
श्नाधिकारः, चन्द्रग्रहणाधिकारः; सूर्यग्रहणाधिकारः, पर्वसम्भवाधिकारः,
ग्रहोदयास्ताधिकारः, चन्द्रच्छायाधिकारः, चन्द्रशृङ्गोन्नत्यधिकारः, ग्रह-
युत्यधिकारः, भग्रहयुत्यधिकारः, महापाताधिकारः, उत्तराधिकारः । गोला-
ध्याये–छेद्यकाधिकारः, गोलबन्धाधिकारः, मध्यगतिवासना, भूगोला-
ध्यायः, ग्रहभ्रमसंस्थाध्यायः, भुवनकोशः, मिथ्याज्ञानाध्यायः, यन्त्रा-
ध्यायः, प्रश्नाध्यायः, एतेऽध्यायाः सहस्रश्लोकैः सन्ति । अत्र प्राचीना-
नामाचार्याणां न कुत्रापि नामानि । आर्यभटशिष्यैः खेटकर्मार्यभटप्रणीतं
सम्यङ् नोदितमत इदं तन्त्रं मयाऽऽरभ्यत इत्येव ग्रन्थनिर्म्माणे कारणमभिहितं
तद्यथा ग्रहगणिताध्यायारम्भे

नत्वा ब्रह्महरित्रिनेत्रदिनकृच्छीतांशुभूनन्दन-
प्रालेयांशुसुतेन्द्रमन्त्रिभृगुजच्छायासुतेभाननान् ।
आचार्योऽऽर्यभटोदितं सुविषमं व्योमौकसां कर्म्म य-
च्छिष्याणामभिधीयते तदधुना लल्लेन धीवृद्धिदम् ॥

विज्ञाय शास्त्रमलमार्यभटप्रणीतं
तन्त्राणि यद्यपि कृतानि तदीयशिष्यैः ।
कर्मक्रमो न खलु सम्यगुदीरितस्तैः
कर्म ब्रवीम्यहमतः क्रमशस्तु सूक्तम् ॥

इत्यनेन लल्लसमकालिकाः प्राचीना वाऽऽर्यभटशिष्या एव नाऽन्ये–
इत्यनुमीयते । स्पष्टाधिकार ४३ श्लोकटीकायां "आर्यभटस्य शिष्याः प्रभा-
करादय" इति भास्करो विलिलेख ( काशिकराजकीयपुस्तकालयपुस्तकं
तथा भास्करवर्णनं विलोक्यम् ) । अहो लल्लसिद्धान्ते प्राचीनानां नामोल्ले-
खाभावात्सर्वत्राऽऽर्यभटस्य शिष्यैरित्युपादानादार्यभटस्य विजयनन्दिप्रद्युम्न-
श्रीसेनलाटादयः कदाचिच्छिष्यप्रशिष्या आसन्निति प्रकल्पनं सर्वथाऽसंभवं
न । लल्लस्य शृङ्गोन्नत्यधिकारे १२ श्लोके चन्द्रशुक्लानयनमुत्क्रमज्यया
वस्तुतोऽतीव चमत्कृतं गोलयुक्तियुक्तं ज्योतिर्विद्भिरादरणीयमस्ति । तद्यथा

“रविशीतकरान्तरांशजीवा विपरीता शशिखण्डताडिता च ।
विहृता त्रिभजीवया सितं स्याच्छशलक्ष्माङ्गवदङ्गुलानि तस्मिन्’ ॥

गणिताध्यायस्योत्तराधिकारे “शाके नखाब्धि ४२० रहिते” इत्यादिना लल्लेनाऽऽर्यभटानुसारागतग्रहेषु बीजसंस्कारश्च कृतो यत्र भटदीपिकाकारः परमेश्वरः शके रूपयुग्माब्धि ४२१ शोधनमुचितमिति स्वमतं प्रकाशयामास ।

भुवनकोशादौ लल्लपदलालित्यं नित्यमौचित्यं भास्करपाण्डित्यं तुच्छीकरोति ।

यथा तेषु मानसादिसरःसु सुराङ्गनानां स्नानेनेन्द्रधनुरुत्पद्यत इत्यनुभव-कल्पनाप्रकाशको भुवनकोशस्य १७ श्लोकः

मज्जन्नाकनितम्बिनीप्रजघनप्रोत्तुङ्गवक्षोरुह-
द्वन्द्वप्रच्युतकुङ्कुमारुणमलं पीतं सुवर्णत्विषा ।
प्रभ्रष्टप्रवरेन्द्रनीलशकलं प्राच्यां तु नीलं क्वचित्
तेष्वम्भश्च सहस्रलोचनधनुर्लीलांशमालम्बते ॥

भटदीपिकाकारपरमेश्वरस्य वाक्येनैवायं लल्ल आर्यभटशिष्य इति ज्ञायतेऽनुमीयते चापरशिष्येभ्योऽयं प्रधानो गणिताध्यायादिश्लोकाभ्यामुपरि लिखिताभ्याम् ।

आर्यभटशिष्यत्वादार्यभटतन्त्रसमय एव लल्लसमयो रूपयुग्मवेदमिति ४२१ शकः ।

महापातं ब्रूहीत्येको गणकोऽन्येन केन चिद्गणकेन पृष्टो लल्लं वर्णयन्नाह ।

“त्रिस्कन्धविद्याकुशलैकमल्लो लल्लोऽपि यत्राऽप्रतिभो बभूव ।
याते‌ऽपि किञ्चिद्गणिताधिकारे पाताधिकारे मम नाऽधिकारः”॥

इत्यस्य श्लोकस्य प्रथा भारतवर्षे बहुधा वर्त्तते ।

लल्लकृतं तन्त्रं गणितगोलाध्यायरूपं बहुनाऽऽयासेन संशोध्य बहुत्र टिप्पणीभिर्विभूष्यास्माभिर्मुद्रितम् । तत्र गणिताध्यायसमाप्तौ

आसीदशेषबुधवन्दितपादपद्मस्तल्लब्धजो गुणवदग्रजवंशजन्मा ।
शाम्बस्ततोऽजनि जनेक्षणकैरवेन्दुर्भट्टस्त्रिविक्रम इति प्रथितः पृथिव्याम् ॥



लल्लेन तस्य तनयेन शशाङ्कमौलेः शैलाधिराजतनयादयितस्य शम्भोः ।
सम्पूज्य पादयुगमार्यभटाभिधानसिद्धान्ततुल्यफलमेतदकारि तन्त्रम् ॥

लल्लकृतं पाटीगणितं चास्ति गोलाध्याये वृत्तपृष्ठफलखण्डने “वृत्तफलं परिधिघ्नं समन्ततो भवति गोलपृष्ठफलमिति स्वगणिते कथं परिधिघ्नं कृतमि”ति भास्करस्योल्लेखादिति ज्ञायते परम्परातः श्रूयते च परन्तु एतत्कृतं पाटीगणितं वा बीजं न दृष्टं मयाऽद्यावधि ।

लल्लस्य काचित्कृतिः फलिते च वर्त्तते बहुत्र फलग्रन्थटीकायां तद्वचनोपलम्भादिति निश्चीयते यथा मुहूर्त्तचिन्तामणिटीकायां पीयूषधाराख्यायां गोविन्दकृतायां शुभाशुभप्रकरणस्य ४१ श्लोके, “यदाह लल्लः—वारर्क्षतिथियोगेषु यात्रामेव विवर्जयेत् । विवाहादीनि कुर्वीत गर्गादीनामिदं वचः” तत्रैव ४६ श्लोके “तदाह लल्लः गोदावर्य्युत्तरतो यावद्भागीरथीतटं याम्यम् । तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये” । एवमनेकानि ॥ परन्त्वियं कृतिर्न दृष्टिप्रथमारूढाऽद्यावधि । लल्लकृतं शिष्यधीवृद्धिदं तन्त्रं वस्तुतो दर्शनार्हम् । नृसिंहदैवज्ञेन वासनावार्त्तिके येषां यन्त्राणां नामानि लिखितानि तानि चास्य यन्त्राध्याये वर्त्तन्ते । ( नृसिंहदैवज्ञवर्णनं विलोक्यम् ) ।

## वराहः, वराहमिहिरो वा वराहमिहरः । ४२७

आदित्यदासतनयः काम्पिल्लके ( कालपीनगरे ) सूर्यदेवताया वरप्रसादमवाप्य स्वपितुर्ज्यौतिषसिद्धान्तं समधीत्यावन्तिकायां तत्रत्यनृपतिन समादरमासाद्य लघुजातकं, बृहज्जातकं, विवाहपटलं, बृहत्संहितां, योगयात्रां, पञ्चसिद्धान्तिकां च व्यरचयत् । बहूनां मते यथा लघुबृहन्नामभेदेन जातकद्वयमकारि वराहेण तथैव लघुबृहत्कृतभेदेन लघुसंहितायाः अर्थात् समाससंहितायाः कर्त्ता च वराहः । केचन “काम्पिल्लके” इत्यत्र “कापित्थके” इति पाठं वदन्ति । वराहकृतबृहज्जातकस्य षड्विंशत्यध्यायपञ्चमश्लोकेन

“आदित्यदासतनयस्तदवाप्तबोधः
काम्पिल्लके सवितृलब्धवरप्रसादः ।
आवन्तिको मुनिमतान्यवलोक्य सम्य-
ग्घोरां वराहमिहिरो रुचिरांचकार” ॥

सर्वं स्फुटं भवति ।

इत्यनेन श्लोकेन पूर्वोक्तं सर्वं स्फुटं भवति ।

इत्यनेन श्लोकेन पूर्वोक्तं सर्वं स्फुटं भवति । केषाञ्चिन्मतेऽयं मगद्विजोऽर्थात्सूर्यो-भट्टोत्पलमतेनायं मगधद्विजः । केषाञ्चिन्मतेऽयं मगद्विजोऽर्थात्सूर्योपासको ब्राह्मणः । जीविकार्थं मगधादुज्जयिनीं गतस्य वराहस्य मगधद्विजत्वमसम्भवं न । एके मगधे स्वगेहे निजपितुःसम्यग्ज्यौतिषमधीत्याऽऽर्यभटादिसिद्धान्तं चावगम्य स्वप्रसिद्ध्यर्थं धनार्जनार्थं च देशाटनं कुर्वता वराहेण काम्पिल्लके सूर्यदेवाराधनेन वरप्रसादमासाद्य परम्परया विक्रमनरपतिविभूषितां लब्धकान्तिकामवन्तिकामवाप्य तत्र वसतिः कृतेति निगदन्ति ।

यथा संप्रति यूरपभाषामधीत्य सुधियः प्रसिद्धा भवन्ति तथा वराहोऽपि स्वसमये यवनभाषामधीत्य नृपसभासु स्वप्रसिद्धिं कारयामासेति तत्संहितायां गर्गवचनेन

"म्लेच्छा हि यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् ।
ऋषिवत्तेऽपि पूज्यन्ते किं पुनर्दैवविद् द्विजः" ॥

इत्यनेन यवनोत्कर्षवर्णनाद्बृहज्जातके "क्रिय*तावुरिजितुमेत्यादि-श्लोकेन यवनभाषायां राशिनामोल्लेखाच्च ज्ञायते ।

सिद्धान्तरीत्या कल्पादेरहर्गणसाधने गणिताधिक्यात् क्लेशो भवति तदपाकरणाय कमपि सिद्धान्तमवलम्ब्य गणकाः करणग्रन्थान् विरचयन्ति तत्रापि यदा गताब्दा अधिका भवन्ति तदाऽहर्गणसाधने तथैव क्लेशोऽतः पुनस्तदपाकरणार्थं नव्या नवं करणं कुर्वन्ति । एवं स्वसमये पञ्चसिद्धान्तिकायां "सप्ताश्विवेदसंख्यं शककालमपास्येत्यादिना ( See Pancha-

* क्रिय, तावुरि, जितुम, लेय, पाथेन वा पाथोन, जूक वा जूक, कौर्प्य, तौक्षिक, आकोकेर, हृद्रोग, इत्थम्, हेलि, हिम्न, आर, ज्यौ, कोण, आस्फुजित्, होरा, केन्द्र, द्रेष्काण वा द्रेक्काण, लिप्ता, अनफा, सुनफा, दुरुधरा, केमद्रुम, वेशि, आपोक्लिम, पणफर, हिबुक, जामित्र, मेषूरण, द्यूनम्, द्यूतम्, रिःफ, कुलीर, त्रिकोण एते ग्रीकशब्दाः वेबर ( Weber ) महाशयेन प्रकाशितास्तत्र हृद्रोग्, कोण, लिप्ता, कुलीर, त्रिकोण, एते च संस्कृतशब्दा भ्रमा-ल्लिखिताः । ( See Indische Literaturgeschichte, p. 227 ) केन्द्र, द्रेष्काण, एतौ चाऽऽर्यभटतन्त्रे च प्रसिद्धौ ॥ पञ्चसिद्धान्तिकाचतुर्दशाध्याये १७ श्लोकेन क्षितिजस्य हरिजमित्यपि संज्ञा नूतना तथा बृहज्जातके दुश्चिक्यसंज्ञा च नूतना । अन्यत्र वोशिसंज्ञा च ।



siddhantika, edited by Dr. G. Thibaut and myself ) रोमकसिद्धान्तानुसारेणाहर्गणं गणयता वराहेण रोमकसिद्धान्तरचनाकालात् सप्ताश्विवेदमित ४२७ शकादहर्गणः साधित इति वदतां डाक्टरभाऊदाज्यादीनां मतं युक्तिशून्यं प्रतिभाति भारतवर्षे सकलकरणग्रन्थेषु करणारम्भशकादेवाहर्गणसाधनदर्शनात् । वस्तुतः खण्डखाद्यकरणटीकायामामराजोक्तस्य "नवाधिकपञ्चशतसंख्यशाके ५०९ वराहमिहिराचार्यो दिवं गतः" इत्यस्य लेखस्य न किमपि प्रमाणम् । न ह्यन्योक्तवचनप्रामाण्यादाचार्यवचनाप्रामाण्यम् । यदि पञ्चसिद्धान्तिकारचनाकाले वराहस्य वयोऽष्टादशवर्षसमं कल्प्यते तदा तज्जन्मशकः = ४०९ । निधनसमयश्चाऽऽमराजोक्त एव गृह्यते तदा वराहस्य पूर्णमायुः शतमायाति तन्नाहो असम्भवं बहुश्रुते बहुविषयचतुरे मगधादागते बहुकृतिकर्त्तरि वराहे । अथवाऽऽत्मजन्मयोगपरिचयार्थं स्वजन्मशकादहर्गणसाधनं कृतमाचार्येणेति बहूनां मतमपि नाऽसम्भवं परन्तु रोमकसिद्धान्तारम्भकालादहर्गणसाधने न काचिद्युक्तिरुत्पद्यते ।

आलबीरूनी (Albiruni) नाम्नाऽपि पञ्चसिद्धान्तिकासमयस्तत्र लिखितः सप्तद्विवेदमितः ४२७ शक एव स्वीकृतः ।

यद्यपि परदेशोद्भवजनस्य देशाटनं कुर्वतः आलबीरूनीनाम्नो लेखो न प्रामाणिकस्तथापि तत्समय सर्वत्रैव पञ्चसिद्धान्तिकायाः प्रचारात् तज्ज्ञानां च विदुषामाधिक्यात् भारते करणग्रन्थरीत्यनुसारतश्च तल्लेखे न संशयः । आधुनिकस्य ज्योतिर्विदाभरणकृतः कालिदासस्याप्रामाणिकं लेखमवलम्ब्य डाक्टरकर्णनाम्ना बृहत्संहिताभूमिका व्यर्थं विस्तारिता ( गणककालिदाससमयवर्णनं विलोक्यम् ) । वराहानन्तरं सार्द्धसप्तशतैः–७५० वर्षैरुद्भवस्य वराहादिविषयकलेखेषु परस्परमसङ्गतेषु कपोलकल्पितेषु न किमपि वाक्यं प्रामाणिकमिति मन्मतम् ।

बृहत्संहितायाः प्रथमाध्यायस्य १० श्लोकेन

वक्रानुवक्रास्तमयोदयाद्यास्ताराग्रहाणां करणे मयोक्ताः ।
होरागतं विस्तरतश्च जन्मयात्राविवाहैः सह पूर्वमुक्तम् ॥

इत्यनेन यद्यप्यस्य सर्वासां कृतीनां नामानि न स्पष्टानि भवन्ति तथापि वराहस्यान्तिमा कृतिर्बृहत्संहितैवेति स्फुटं तेन श्लोकेन ।

लघुजातकं भट्टोत्पलटीकासहितं तथैव बृहज्जातकं च संप्रति फलितवेदिनां दैववेदिनां गृहेषु सर्वत्रैव लिखितं मुद्रितं चोपलभ्यते । मिथिलाप्रान्तेषु

लघुजातकस्यापि प्रचारो विशेषरूपेण काश्यां च बृहज्जातकस्यैव । बृहत्संहिता
च डाक्टरकर्णसाहिबमुद्रणकालाद्विशेषतः प्रसिद्धा । समाससंहिताऽद्यावधि न
दृष्टिगोचरीभूता । योगयात्राविवाहपटले बहुनाऽऽयासेन लभ्येते । एतत्पुस्तकद्वयं
च काश्यां ज्योतिर्विदः श्यामाचरणस्य गेहे क्रमेण यात्राविवाहमुहूर्त्तवर्णन-
परमस्माभिर्दृष्टम् । पञ्चसिद्धान्तिका च बहुनाऽऽयासेन डाक्टरथिबोसाहि-
बेन मया च यावच्छक्यं संशोध्य नवीनां टीकां च विरचय्य मुद्रिता । अस्या
अन्या प्रतिरद्यावधि नोपलब्धा । फलग्रन्थेषु विवाहपटलस्य बहूनि वाक्या-
न्युपलभ्यन्ते ( पद्मनाभमिश्रवर्णनं विलोक्यम् ) । यथा शास्त्रान्तरेऽध्याया
भवन्ति तथा तन्त्रशास्त्रेऽध्यायस्थाने पटलं, लिख्यते तेन तान्त्रिकलेखानु-
सारेण विवाहपटलेन विवाहाध्यायो गृह्यते । यथा दुर्गापटलं, कालीपटल-
मित्यादि । (See Dr. Kern's Preface to Brihatsamhita, p. 25.)
बृहज्जातकोपरि भट्टोत्पलस्य, महीधरस्य, महादेवस्य च टीका प्रसिद्धा ।
एका केरलीटीका च दशाध्यायी नाम्ना दुर्मिलाऽस्ति यस्या एका प्रतिर्बहु-
नाऽऽयासेन काशिकराजकीयपुस्तकालये स्थापनार्थं मया लेखकद्वारेणो-
त्पादिता ।

अस्यां टीकायां—"गोविन्देनापि बृहज्जातकटीका कृतेति लिखितमस्ति ।
तथाऽत्र प्रथमश्लोकटीकायां "* चन्द्रो जलमर्कोऽग्निरि" त्यादि सूर्यभटस्य,
भगवत्पादाचार्यवेदान्ताचार्यस्य, गोविन्दस्य, हलधरस्य, श्रीपतेः, साराव-
लीकारस्य, कृष्णाचार्यस्य, भट्टोत्पलस्य, आर्यभटस्य, 'सिंहो वृषः प्रथममेष'
इत्यादिचतुर्दशश्लोकटीकायां विद्यामाधवस्य, वसिष्ठस्य, पराशरहोरायाः,
वादरायणस्य, यवनेश्वरस्य, एकोनविंशतिश्लोकटीकायां "शशिकृतानभग-
मैराहता राशिजीवा" इत्यादि तथा "शून्याद्रिरसरूपाणि भूतरन्ध्रमुनीन्दवः ।
पञ्चाग्निरन्ध्रशशिनो मेषादीनां निरक्षजाः ॥ चरप्राणाः" इत्यादि भास्करस्य, विद्व-
ज्जनवल्लभाख्यस्य, द्वितीयाध्यायान्तिमश्लोकटीकायां कदाचिद्ब्रह्मसिद्धान्तः
सावित्रस्तु कदाचन । कदाचिद्रोमशः स्पष्टो न कदाचित्तथेतरौ"(इतरौ ब्रह्मवासि-

* अथ श्लोकश्चाऽऽर्यभटीयगोलपादस्य सप्तत्रिंशत्संख्याकः ।

† एतानि सिद्धान्तशिरोमणिरचयितुर्भास्करस्य वचनानि न तेनाऽयमन्यो भास्कर
इत्यनुमीयते



ष्ठौ)इति पराशरस्य, "अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते"
इत्यादिश्लोकटीकायां "वृषस्य पञ्चविंशतिकलायां कदा बुधो भविष्यति—
एतदर्थमाचार्येण पञ्चसिद्धान्तिका विनिर्मिता यदि पञ्चानां मतेन बुधः पञ्चविंश-
तिकलायामागच्छेत्तर्हि समीचीन एवान्यथा येन दृग्गणितैक्यं भवेत्तेनैव
साध्यः" इति तत्कृतदशमाध्यायारम्भे "तथा चाऽऽचार्यपुत्रेणोक्तं" "यो
यो भावः स्वामिदृष्टो युतो वे" त्यादिषट्पञ्चाशिकाकारस्य पृथुयशसो वच-
नान्युपलभ्यन्ते ।

बृहज्जातके च मय-यवन-मणित्थ-शक्ति-विष्णुगुप्त-देवस्वामि-सिद्धसेन-
जीवशर्म-सत्याचार्या ( * भदन्त ) णां नामानि वराहेण लिखितानि ।
संहिताया अन्ते च तत्रत्यविषयाणामनुक्रमणिका च वर्णिता क्रमेण ।

अथ वराहेणाष्टपञ्चाशत्तमेऽध्याये ४४ श्लोकेन "पद्माङ्कितकरचरणः
प्रसन्नमूर्त्तिः सुनीचकेशश्च । पद्मासनोपविष्टः पितेव जगतो भवेद्बुद्धः"
इत्यनेन बुद्धप्रतिमालक्षणं, ४५ श्लोकेन "आजानुलम्बबाहुः श्रीवत्साङ्कः
प्रशान्तमूर्त्तिश्च । दिग्वासास्तरुणो रूपवांश्च कार्योऽर्हतां देवः" ॥ इत्य-
नेन चाऽर्हद्देवप्रतिमालक्षणं चोक्तमितिवैदिकधर्म्मावलम्बिनां न रीतिरिति
वदतां मतं न तथ्यं प्रतिमालक्षणं कर्त्तुं प्रवृत्तस्य विदुषः सर्वलक्षणवर्णना-
ऽऽवश्यकत्वात् । पञ्चसिद्धान्तिकायाः पञ्चदशाध्यायस्य २० श्लोकेन "लङ्का-
र्द्धरात्रसमये दिनप्रवृत्तिं जगाद चार्यभटः । भूयः स एव सूर्योदयात् प्रभृ-
त्याह लङ्कायाम्" ॥ इत्यनेन वराहेणाचार्यभटस्य दिनप्रवृत्तौ मतद्वयं कथितं
परन्तु आर्यभटीयतन्त्रे दशगीतिकासूत्रे सूर्योदयादेव दिनप्रवृत्तिर्लिखिताऽ
न्यमतस्य चर्चा न कुत्रापि वर्त्तते (See Dr. Kern's edition of Ar-

* डाक्टरकर्णसाहिबेन भदत्त इति नाम लिखितं ( see Preface to Brihatsamhita. p. 29 and
61 ) परन्तु तस्य भमिताः अर्थात् सप्तविंशतिसंख्याका दन्ता आसन् तेन भदन्त इति कथ्यत इति
भारतवर्षे चिराज्जनश्रुतिः । यथा पुष्पदन्तः महिम्ननामस्तोत्रकर्त्ता ।

प्राचीनानां ग्रन्थरचयितॄणां नामानि प्रायो दत्तान्तानि कचिदेवोपलभ्यन्ते । येषां सप्त-
विंशतिर्दन्तास्ते सत्यवादिनो भवन्तीत्यद्यावधि भारतवर्षे प्रसिद्धिः । तेनैवास्य सत्याचार्य
इति नामान्तरम् ।

गणितस्कन्धविशेषा
yabhatiya ) । वराहेण पञ्चसिद्धान्तिकायां वह्वो
विहितास्ते च विस्तरभयान्न लिख्यन्ते । (See Panchasiddhantika,)
वराहस्य सर्वे ग्रन्थाः प्रकटयन्ति ज्यौतिषस्कन्धत्रयेऽद्वितीयं पाण्डित्यं
सर्वजनमनस्तोषकरं काव्यकलाकलापवैभवं च । मन्मते वराहार्यभटौ
समकालिकौ मगधराजधान्यां वराहश्चार्यभटमतं सम्यग विज्ञाय ततोऽ
वर्त्ती गत इति ।

## कल्याणवर्म्मा । ५००

वराहमिहिरकृतबृहज्जातकतोऽपि बृहतीं
देवग्रामवासी व्याघ्रभटेश्वरो
सारावलीं कृतिं
होराशास्त्रे यवननरेन्द्रादिरचितहोराशास्त्रसारप्रसूनां
व्यरचयत् ।

'विस्तरकृतानि
यद्यप्यत्र समयादिकं नास्ति तथापि ग्रन्थारम्भकारणेन
होरातन्त्वं रचितं वराहमिहिरेण
मुनिभिः परिहृत्य पुरातनानि शास्त्राणि ।
विषयविभागः
राशिदशवर्गभूपतियोगायुर्दाययोगदशादीनाम् ।
संक्षेपात् ॥
यवननरेन्द्रा-
अत एव विस्तरेभ्यो
स्पष्टः कर्त्तुं नो शक्यते यतस्तेन ॥
सारं समुद्धृत्य ॥
दिरचितशास्त्रेभ्यः सकलमसारं त्यक्त्वा तेभ्यः

देवग्रामपयः प्रपोषणबलाद्ब्रह्माण्डसत्पञ्जरं
कीर्तिः सिंहविलासिनीव सहसा यस्येह भक्त्वा गता ।
होरां व्याघ्रभटेश्वरो रचयति स्पष्टां तु सारावलीं
श्रीमान् शास्त्रविचारनिर्म्मलमनाः कल्याणवर्मा कृती" ॥

होराशास्त्रेऽस्यैव
इत्यनेन सारावल्यारम्भस्थेन वराहमिहिरानन्तरं
संक्षिप्तां दृष्ट्वा
व्याघ्रनृपस्य कल्याणवर्म्मणः कृतिः । अर्थाद्वराहस्य कृतिं
कल्याणवर्म्मणा विस्तारिता यवनेन्द्रादिशास्त्रेभ्य इति । अतो वराहानन्तरं
"श्रीचापवंशतिलके श्रीव्याघ्रमुखे नृपे शकनृपालात् । पञ्चाशत्संयुक्तैर्वर्ष-
शतैः पञ्चभिरतीतैः" इति ब्रह्मगुप्तोक्तात् (ब्रह्मगुप्तवर्णनं विलोक्यम) श्री-
व्याघ्रमुखनृपात्तथैवात्रापि दर्शनात् परम्परातो ज्योतिर्विन्मुखात् "वर्षशतानां
मध्ये न केनचित्पूरिता धृता चीनैः । भट्टोत्पलस्तु पूर्णां चकार सारावलीं
सकलाम्" ॥ इति श्लोकस्य श्रवणात् (भट्टोत्पलवर्णनं विलोक्यम् )
बृहज्जातकटीकायां बहुत्र भट्टोत्पलस्य सारावलीप्रमाणोल्लेखाच्च ब्रह्मगुप्ता-
सन्नसमयो हि पञ्चशतासन्नशकः कल्याणवर्म्मणा इत्यनुमीयते ।



सारावल्यां द्विचत्वारिंशदध्यायाः सन्ति तत्र बृहज्जातकवत्सर्वे योगा विस्तरतो वर्णिताः । १८ अध्यायसमाप्तौ "फलमेवं मन्दिलः प्राह" इत्यनेन मन्दिलस्य, २९ अध्यायारम्भे "श्रीदेवकीर्त्तिराजः पञ्चमहापुरुष-संज्ञितान् नृपतीनाम्" इत्यनेन देवकीर्त्तिराजस्य, ४२ अध्यायारम्भे "कनकाचार्यस्य मताद्भियोनिसंज्ञं प्रवक्ष्यामि" इत्यनेन च कनकाचार्यस्य च नामानि वराहोक्तादपूर्वाणि लिखितानि सन्ति ।

होरोष्णार्त्तानां शिष्याणां तापपापापनोदनाय शैलरूपादात्मनः शरीरात्सारावलीरूपा नदी कल्याणवर्म्मणोत्पादितेति रूपकं प्रथमाध्यायसमाप्तौ

"होरात्युष्णार्त्तानां शिष्याणां स्फुटतरार्थशिशिरजला ।
कल्याणवर्म्मशैलान्नदीह सारावली प्रसृता" ॥

इत्यनेन कृतं ग्रन्थकृता ।

आयासेन प्राचीनज्योतिर्विदां गृहेषूपलभ्यत इयं मन्निकटेऽपि काश्मीर-लिपिलिखिता चास्त्येका प्रतिरशुद्धा । सार्द्धसहस्रद्वयासन्ना श्लोकसंख्याऽत्र ।

मुजफ्फरपुरमण्डलान्तर्गतचिकनौटानामग्रामनिवासिनो वैयाकरणस्य झोपाख्यश्रीलालजीशर्म्मणो मैथिलब्राह्मणस्य गेहेऽति प्राचीना शुद्धा चैका सारावली वर्त्तते यस्या अन्ते

बाणाक्षिबाणशशि १५२५ संमितशाककाले
तच्चैत्रकृष्णवनमालितिथौ सुरेज्ये ।
राढ्यां स्थितेन कृतिना प्रतिहस्तकेन
सारावली विलिखिता मधुसूदनेन ॥

मन्मतेऽयमेव कल्याणवर्म्मा नृपतिर्बघेलवंशीयानां रीवांनगराधिपतीनां मूलपुरुषः सारावल्यादिश्लोकेन "देवग्रामपयःप्रपोषणबला" दित्यादिना रीवांराजधानीतोऽग्निविदिशि योजनचतुष्टयान्तरे वर्त्तमानस्य संप्रति देवरा-नाम्ना प्रसिद्धस्य ग्रामस्य निवासी ।

हण्टरसाहिब (W. W. Hunter) लेखानुसारेण व्याघ्रदेवस्य पुत्रः करनदेवः (Kurun Deo) पञ्चेन्दुरस ६१५ मिते खीष्टशके रीवांनगरे सिंहासनमध्यरोहत् (See W. W. Hunter's Imperial Gazetteer of India about Rewah) मन्मते व्याघ्रदेवस्य बैगदेवः (Baig Deo) कल्याणदेवस्य च करनदेवः (Kurun Deo) अपभ्रंशः ॥

## ब्रह्मगुप्तः । ५२०

श्रीव्याघ्रमुखा-
नखपञ्चशके समुद्भवो जिष्णुगुप्तसुतश्चापवंशावतंसस्य
ख्यस्य नरेन्द्रस्य राज्यकाले खबाणबाण ५५० शके विष्णुधर्मोत्तरपुराणा-
न्तर्गतब्रह्मसिद्धान्तानुसारेण त्रिंशद्वर्षसमवयसि ब्राह्मं स्फुटसिद्धान्तं सप्ता-
ष्टपञ्चमित ५८७ शके खण्डखाद्यनामकं करणं च समकरोत् । बहूनां मतेऽयं
विष्णुगुप्तस्य पौत्रो गुप्तपदान्ताद्वैश्यकुलोद्भूतो रीवांनगराधिपतेर्व्याघ्रभटे-
श्वरस्य सेवकः ।

चर्चां न चकार
अयं यद्यपि स्वसिद्धान्तेऽयनांशस्पष्टक्रान्त्यादीनां
तथापि सिद्धान्तीयविशेषान् आर्यभट-वराहमिहिर-श्रीसेन-विष्णुचन्द्रादि-
खण्डनपरान् परःशतान वस्तुतो गोले गणिते चोपयुक्तानुत्पादितवान् ।
भास्कराचार्य्येणाप्यस्यैव गणकचक्रचूडामणेरागमः स्वीकृतः। "ब्रह्माह्वयश्री-
धरपद्मनाभवीजानी" त्यादिभास्करीयवीजान्तिमलेखेन ब्रह्मगुप्तकृतं वीजं
चास्ति यस्य तत्सिद्धान्ताष्टादशाध्यायरूपस्याङ्गलभाषायां कोलब्रूकसाहिबा-
भिधेन सप्तेन्दुवसुभूमिमिते १८१७ ख्रीष्टशकेऽनुवादः कृतः । अत्र ब्राह्मस्फु-
टसिद्धान्तस्य द्वादशाध्यायरूपस्य ब्रह्मगुप्तव्यक्तगणितस्य भास्करीयलीला-
वतीवीजयोश्चानुवादोऽङ्गलभाषायां वर्त्तते ।

ब्रह्मगुप्तसिद्धान्ते वासनाभाष्याख्या चतुर्वेदाचार्येण पृथूदकस्वामिना
कृता टीकाऽस्ति यत्र ज्याशब्देनोत्क्रमज्यां गृहीत्वा बलनदृक्कर्मादिव्याख्या
कृता टीकाकृता । अयं सिद्धान्तस्तट्टीका च बहुनाऽऽयासेन कुत्रचिल्लभ्यते।
सिद्धान्तस्यैका प्रतिरशुद्धा लेखकलिखिता काशिकराजकीयपुस्तकालयेऽस्ति
यत्र समाप्तौ

श्रीचापवंशतिलके श्रीव्याघ्रमुखे नृपे शकनृपालात् ।
पञ्चाशत्संयुक्तैर्वर्षशतैः पञ्चभिरतीतैः ॥
ब्राह्मः स्फुटसिद्धान्तः सज्जनगणितज्ञगोलवित्प्रीत्यै ।
त्रिंशद्वर्षेण कृतो जिष्णुसुतब्रह्मगुप्तेन ॥ इति लेखः ।

अस्यैव सिद्धान्तस्य प्रतिविम्बरूपो भास्करकृतः सिद्धान्तशिरो-
मणिः ॥

ब्राह्मस्फुटसिद्धान्तस्यादौ
ब्रह्मोक्तं ग्रहगणितं महता कालेन यत्खिलीभूतम् ।
अभिधीयते स्फुटं तज्जिष्णुसुतब्रह्मगुप्तेन ॥



संसाध्य स्पष्टतरं वीजं नलिकादियन्त्रेण ।
तत्संस्कृतग्रहेभ्यः कर्त्तव्यौ निर्णयादेशौ ॥

इति लेखेन ब्रह्मगुप्तः स्वयं च वेधकर्त्तेति ज्ञायते ॥

एतत्कृतं खण्डखाद्याख्यं करणं च सटीकं मन्निकटे वर्त्तते ( भट्टोत्पल-
वर्णनं विलोक्यम् ) । यत्रादौ ब्रह्मगुप्तेन मदीयं करणमार्यभटानुसारीति
विलिख्य बहुत्रान्यथा प्रतिपादितम् ।

स्वसिद्धान्तस्य दूषणाध्याये

"युगमन्वन्तरकल्पाः कालपरिच्छेदकाः स्मृतावुक्ताः ।
यस्मान्न रोमके ते स्मृतिवाह्यो रोमकस्तस्मात्" ॥

इत्यनेन रोमकखण्डनं कृतम् ।

ब्रह्मगुप्तस्य गणिते सिद्धान्तकरणाकारं कृतिद्वयमपहायान्याः कृतयो
नोपलभ्यन्ते न तन्नामानि च श्रूयन्ते तेनान्या कृतिः काचिन्नेति विज्ञा-
यते ।

यथा ब्रह्मगुप्तेनाऽऽर्यभटादीनां खण्डनं कृतं तथैव वटेश्वरेण स्वसि-
द्धान्ते बहुत्र ब्रह्मगुप्तखण्डनं कृतमस्ति । अस्यैव "कजन्मनोऽष्टौ सदलाः
समा ययुरि" त्यादिना वर्त्तमानस्य ब्रह्मण आयुः सार्द्धवर्षाष्टकं गतमिति
मतम् । अस्य सिद्धान्तग्रन्थो मया संपूर्णो न दृष्टः । ग्वालियरमहाराजाश्रि-
तस्य श्रीबालज्योतिर्विदो गेहेऽयमस्तीति श्रुत्वा तत्रासकृत्पत्रं प्रेषितं परन्त्व-
द्यावधि किमप्युत्तरं न प्राप्तम् ।

## मुञ्जालः । ५८४

एतन्निर्मितं लघुमानसाख्यं षष्ट्यनुष्टुप्श्लोकात्मकं करणमस्मद्दृष्टिगो-
चरं जातम् । अत्र वेदाष्टशरमिते ५८४ शके ग्रहाणां ध्रुवका लिखितास्तत
इष्टदिनपर्यन्तं द्युगणसाधनं द्युगणादिनगणोद्भवखेटसाधनं तत्र ध्रुवकसं-
स्कारेणेष्टदिने ग्रहाश्च संसाधिताः सन्ति । अत्र मूलश्लोकेषु मुञ्जालस्य न
कुत्रापि नाम किन्तु समाप्तौ "इति मुञ्जालभट्टविरचिते लघुमानसाख्ये
करणे शृङ्गोन्नत्यधिकारः" इति लेखानुसारेणेदं लघुमानसाख्यं करणं
मुञ्जालनिर्मितमिति ज्ञायते ।

इदं लघुमानसाख्यं काशिकराजकीयपुस्तकालयेऽपि वर्त्तते तत्राप्यन्ति-
मो लेखः पूर्वोक्तसम एव । कोलब्रूकसाहिबलिखितोज्जयिनीस्थसिद्धान्त-
विदांसमयावल्यामपि मुञ्जालस्य वेदाष्टबाणमित ५८४ एव शकः । अयं

मुञ्जालतोऽल्पो मु-
५८४ शकश्च भास्कराचार्यप्रणीतसिद्धान्तशिरोमणिशककालतोऽल्पो मु-
ञ्जालसमयसूचकः प्रायस्तथ्यो विभाति। भास्करतोऽपि मुञ्जालस्य प्राची-
नत्वात्। "अयनचलनं यदुक्तं मुञ्जालाद्यैः स एवायम्। तत्पक्षे तद्भ-
गणाः कल्पे गोङ्गर्तुनन्दगोचन्द्राः १९९६६९"। इति भास्करोक्तसिद्धान्त-
शिरोमणिगोलाध्यायगोलबन्धाधिकारेऽयनांशप्रतिपादने मुञ्जालमतोपादा-
नाच्च। अथ मरीचौ * मुनीश्वरकृतसिद्धान्तशिरोमणिटीकायामत्र मुञ्जा-
लस्यायनविषये यान्यार्याछन्दसा वचनानि लिखितानि तानि चास्मिन्
लघुमानसे न कुत्रापि सन्ति। लघुपदोपादानाल्लघुमानसस्यारम्भे

"प्रकाशादित्यवत् ख्यातो भारद्वाजो द्विजोत्तमः।
लघुपूर्वं स्फुटोपायं वक्ष्येऽन्यल्लघुमानसम्" ॥

इत्यत्र "अन्य" त्पदोपादानाच्चास्य मुञ्जालस्यान्यापि कृतिर्याधुना
मद्दृष्टिगोचरानागताऽवश्यमेव वर्त्तत इत्यनुमीयते तत्र कदाचिन्मुनीश्व-
रलिखितवचनान्युपलभ्यानि स्युः।

प्रथमश्लोकलेखतोऽयं भरद्वाजकुलोद्भूत इत्यवगम्यते। तृतीयश्लोकेन
"शकः कृतेष्विभैरून" इत्यादिना द्वादशश्लोकेन

"कृतेष्विभमिते शाके ८५४ मध्याह्ने रविवासरे।
चैत्रादौ ध्रुवकान् वक्ष्ये रविचन्द्रेन्दुतुङ्गजान्" ॥

इत्यनेन चास्य ग्रन्थकृतः समयः ५८४ शकः स्फुट एव।

अत्र मध्यमाधिकारः, स्पष्टाधिकारः, तिथ्यधिकारः, त्रिप्रश्नाधिका-
रः, ग्रहयुत्यधिकारः, सूर्यग्रहणाधिकारः, चन्द्रग्रहणाधिकारः, शृङ्गोन्न-
त्यधिकार इति क्रमेणाऽष्टाधिकाराः सन्ति।

स्पष्टाधिकारे प्रथमपदे कोटिर्धनं द्वितीये ऋणं तृतीये ऋणं
चतुर्थे धनमिति विलक्षणं वर्णनं सम्प्रति प्रचलितयूरपदेशीयत्रिकोण-

---

* मरीचिस्थमुञ्जालश्लोकाश्च।

उत्तरतो याम्यदिशं याम्यन्तात्तदनु सौम्यदिग्भागम्।
परिसरतां गगनसदां चलनं किञ्चिद्भवेदपमे ॥
विषुवदपक्रममण्डलसंपाते प्राचि मेषादिः।
पश्चात्तुलादिरनयोरपक्रमाऽसंभवः प्रोक्तः ॥
राशित्रयान्तरेऽस्मात्कर्कादिरनुक्रमान्मृगादिश्च।
तत्र च परमा क्रान्तिर्जिनभागमिताथ तत्रैव ॥
निर्दिष्टोऽयनसंधिश्चलनं तत्रैव संभवति।
तद्भगणाः कल्पे स्युर्गोरसरसगोऽङ्कचन्द्रमिताः ॥



मितिस्थधनर्णवदस्ति। तथा चन्द्रोच्चरव्यन्तरेण * रविचन्द्रान्तरेण च
स्पष्टचन्द्रे तदीयगतौ चान्यः संस्कारश्च पूर्वाचार्यप्रणीतसंस्कारतो विलक्षणः
प्रतिपादितः। वेदगुणाब्धि ४३४ शके ऽत्रायनांशाभावः। अष्टांशाः ८ अष्ट-
कलाः ८ त्रिज्या चात्र।

अस्यान्ते

"मानसाख्यं ग्रहज्ञानं श्लोकषष्ट्या मया कृतम्।
भवन्त्यत्रायशोभाजः प्रतिकञ्चुककारिणः" ॥ इति।

काशिकराजकीयपुस्तकालये ह्युदाहरणसहितं लघुमानसं खण्डितमशुद्धं
चैकं वर्त्तते तत्र सर्वे श्लोका लघुमानसस्था एव। परन्तु ग्रहाणां ध्रुवकाश्च
चतुर्दशशतसमे १४०० शके मकरन्दकालिके लिखितास्तथोदाहरणं च वेदन-
वनेदधराशकीयं १४९४ सर्वं वर्णितमस्ति।

केनेदमुदाहरणं ध्रुवकपरिवर्त्तनं च कृतमित्यत्र न लिखितम्। त्रिप्रश्ना-
ध्याये स्वदेशोदयसाधनपर्यन्तमेवात्र खण्डितो ग्रन्थः। कदाचिदस्य समाप्तौ
ग्रन्थकृन्नामादिवर्णनं स्यात्। चरादिकं च काम्पिल्यनगरस्य लिखितमत्र।

आर्यभटीयतन्त्रटीकाकृतः परमेश्वरस्य कदाचिदिदमुदाहरणं स्यादित्य-
नुमीयते तत्र "व्याख्यातं लघु चान्यच्च मानसमि" त्युल्लेखात्।

## उत्पलः। ८८८

यद्यप्ययं बृहत्संहितादिटीकारम्भे मङ्गलाचरणे "द्विजवरष्टोकांकरोत्यु-
त्पल" इति स्वनामोत्पल इत्येव लिखति तथाप्येतद्रचितप्रश्नज्ञाननाम्नि
प्रश्नग्रन्थे पूर्णं नाम भट्टोत्पल इति लिखितमस्ति तेनैव सर्वे गाणितिका अमुं
भट्टोत्पलमेवादराद्वदन्ति। पञ्चसिद्धान्तिकां विहाय वराहमिहरकृतसर्वग्रन्थेष्वे-
तत्कृताष्टीका उपलभ्यन्ते। वराहमिहरपुत्रपृथुयशःकृतषट्पञ्चाशिकायां शुभा-
शुभप्रश्नकथनरूपायां ब्रह्मगुप्तकृतखण्डखाद्यकरणग्रन्थे चास्ति टीका भट्टो-
त्पलकृता।

---

* अयं संस्कारश्च "इवेक्शन वेरियेशन् नामकसंस्कारवत् प्रतिभाति।

तत्र श्लोकौ च

इन्दूच्चोनार्ककोटिघ्ना गत्यंशा विभवा विधोः।
गुणो व्यर्केन्दुदोःकोट्यो रूप१पञ्चा५प्तयोः क्रमात् ॥
फले शशाङ्कतद्गत्योर्लिप्ताद्ये स्वर्णयोर्वधे।
ऋणं चन्द्रे धनं भुक्तौ स्वर्णसाम्यवधेऽन्यथा ॥

अत्र व्याख्याकारः "अयं संस्कारस्तिथिमयोगसाधने न क्रियते पूर्वैरुपेक्षितत्वात्" ॥

षट्पञ्चाशिकाषट्पञ्चाशच्छ्लोकटीकायां "तथा चास्मदीये प्रश्नज्ञा-
ने" इत्यस्य लेखं दृष्ट्वा प्रश्नज्ञानान्वेषणतत्परोऽहं वाराणस्यां श्रीसेवारामसू-
नुसिद्धेश्वरज्योतिर्विदो गेहे दृष्टवानेतत्प्रश्नज्ञानम् ।

तत्रादौ

रविशशिकुजबुधगुरुसितरविजगणेशान् प्रणम्य भक्त्यादौ ।
वक्ष्येऽहं स्पष्टतरं प्रश्नज्ञानं हिताय दैवविदाम् ॥

अन्ते च

भट्टोत्पलेन शिष्यानुकम्पयावलोक्य सर्वशास्त्राणि ।
आर्यासप्तत्यैवं प्रश्नज्ञानं समासतो रचितम् ॥

अस्य समय एतत्कृतबृहज्जातकटीकान्तिमश्लोकेन

"फाल्गुनस्य द्वितीयायामसितायां गुरोर्दिने ।
वस्वष्टाष्टमिते शाके कृतेयं विवृतिर्मया" ॥

इत्यनेन वस्वष्टाष्टमितः ८८८ शाक इति ज्ञायते ।

एतेन बृहत्संहिताटीकायां बहूनां प्राचीनानां भट्टवलभद्रादीनां वचनानि लिखितानि तथापि टीकावलोकनेन गणितेऽस्य पाटवं प्रौढं न । भट्टोत्पलेन बृहत्संहिताटीकायां यानि सूर्यसिद्धान्तवचनानि लिखितानि तानि सम्प्रत्यु-पलब्धसूर्यसिद्धान्ते नोपलभ्यन्ते । भट्टोत्पलो वराहमिहरकुलोद्भूत एवेति केचिद्वदन्ति तन्न तथ्यं द्वयोर्नामसम्प्रदायभेदत्वात् ।

ब्रह्मगुप्तकरणग्रन्थखण्डखाद्यटीका भट्टोत्पलकृता श्रीहरिनाथद्विवेदितो मयाऽतिप्राचीना प्रायः शुद्धा लब्धा यत्प्रत्यन्तरं श्रीथिबोसाहबमहाशयनिकटे वर्त्तते । बृहज्जातकटीकायां साराव-लीवचनानि बहूनि लिखितानि भट्टोत्पलेन । तेनैवायं सारावलीपूरक इति लोकैः कथ्यते ( कल्याणवर्म्मणो वर्णनं विलोक्यम् ) ॥

मच्छिष्यश्रीशशिपालशर्म्मणा लिखितं

## भट्टश्रीधरः श्रीधरो वा श्रीधराचार्यः । ९१३

अस्य पाटीगणिते त्रिशतिका कृतिर्जातके केशवपद्धतिवत्पद्धतिश्चोप-लभ्यते बहुनाऽऽयासेन । त्रिशतिकाऽऽर्याशतत्रयात्मिका प्राचीना प्रायः शुद्धा च काशिकराजकीयपुस्तकालये तथा काश्यां मन्निमित्रराजाजीज्योतिर्विद्गृहे चास्ति ।

यस्यादौ

"नत्वा शिवं स्वविरचितपाट्या गणितस्य सारमुद्धृत्य ।
लोकव्यवहाराय प्रवक्ष्यति श्रीधराचार्य्यः" ॥

इति लेखेनैतत्कृता बृहती काचित् पाट्यस्ति यस्याः साररूपेयं त्रिशतिकेति



ज्ञायते । भास्करीयबीजान्तिमलेखेन "ब्रह्माह्वयश्रीधरपद्मनाभबीजानि यस्मादतिविस्तृतानी" त्यनेन श्रीधरकृतं विपुलं बीजं चावगम्यते परन्तु पाटीबीजगणिते एतत्कृते न कुत्राप्युपलब्धे अद्यावधि ।

त्रिशतिकायां परिभाषाप्रकरणे "षोडशपणाःपुराणः" इति भास्करकृत-द्रम्मसंज्ञपर्यायः पुराणश्च लभ्यते । तथाऽऽदौ संख्यास्थानानि "एकदशश-तमित्यादिना निरूप्य ततः सङ्कलनव्यवकलनविधिं हित्वाएकद्वित्र्यब्धिपञ्चा-द्यङ्कानां योगार्थं सङ्कलितविधिः सङ्कलितादृच्छानयनविधिश्च वर्णितो ग्रन्थ-कृता । ततो गुणनभागहारवर्गवर्गमूलघनघनमूलादिविधयः क्रमानुसारेणात्र सन्ति । अत्र गुणनस्य संज्ञा प्रत्युत्पन्न इति विलक्षणाः स च सम्प्रति भा-स्करपाटीगणिते नोपलभ्यते । भास्करेण लीलावत्यां "गुण्यान्तमङ्कं गु-णकेन हन्यादुत्सारितेनैवमुपान्तिमादी" नित्यादिना यो गुणनविधिः प्रदर्शितस्तस्य काचित्संज्ञा नोक्ता श्रीधरेण च ।

"उत्साय्र्योत्सार्य्य ततः कपाटसन्धिर्भवेदिदं करणम् ।
तस्मिंस्तिष्ठति यस्मात्प्रत्युत्पन्नस्ततस्तत्स्थः" ॥

इत्यादिना तस्य "कपाटसन्धि"रिति संज्ञाकृता ॥ एवं त्रिशतिकायां बहुत्र विलक्षणानि संज्ञानि सन्ति ।

अत्र, अभिन्नगुणन-भागहार-वर्ग-वर्गमूल-घन-घनमूल-भिन्न-सम-च्छेद-भागजाति-प्रभागजाति-भागानुबन्ध-भा*गमातृजातिवाल्लीसवर्णन-स्तम्भो†‡देशकरणसूत्र-त्रैराशिक-पञ्चराशिक-सप्तराशिक-नवराशिक-भा-ण्ड-प्रतिभाण्ड-मिश्रकव्यवहार-+ भाव्यकव्यवहारसूत्र-× एकपत्रीकरण-सूत्र-सुवर्णगणित-प्रक्षेपकप्रकरण- ÷ समक्रयविक्रयसूत्र-श्रेढीव्यवहार-क्षेत्रव्यवहार-खातव्यवहार-चितिव्यवहार-**काष्ठव्यवहार--राशिव्यवहार-छायाव्यवहाराः सन्ति ।

---

* स्वांशानुबन्धस्वांशापवाहयोर्भागमातृजातिसंज्ञा ।

† एकजातिकरणम् ।

‡ इष्टकर्म्म ।

+ यथा लीलावत्यां प्रमाणकालेन हतं प्रमाणं विमिश्रकालेन हतं फलं च स्वयोगभक्त चेत्यादिसूत्रम् ।

× यथा लीलावत्यां अथ प्रमाणैर्गुणिताः स्वकाला इत्यादिसूत्रम् ।

÷ यथा लीलावत्यां पण्यैः स्वमूल्यानि भजेदित्यादिसूत्रम् ।

** यथा लीलावत्यां क्रकचव्यवहारः ।

क्षेत्रव्यवहारे आद्ये जात्यत्रिभुजे भुजकोटिवर्गयोगः कर्णवर्गो भवती-
त्यस्य सिद्धान्तस्य न चर्चा समानान्तरचतुर्भुजे यस्य ऋजुवदनचतुर्भुज-
मिति संज्ञा कृता लम्बाबाधानयने च सिद्धान्तः कथितः। व्यासवर्गाद्दशगु-
णात्पदं परिधिः। ततो वृत्तक्षेत्रफलं परिधिव्यासघातचतुर्थांशसममेवानीतम्।
वृत्तपृष्ठघनफलचर्चा न कुत्रापि। वृत्तचापक्षेत्रस्य फलं च

"जीवाशरैक्यदलहतशरस्य वर्गं दशाहतं नवभिः।
विभजेदवाप्तमूलं प्रजायते कार्मुकस्य फलम्"

इत्यनेन साधितम्। खातव्यवहारे च सूचीघनं साधितं वापीघनफलं च

"मुखतलतद्योगानां वर्गैक्यकृतेः पदसंगुणायाः।
वेधगुणं चतुरन्वितविंशतिभक्तं फलं कूपे" ॥

इत्यनेन विलक्षणं साधितम्। छायाव्यवहारे द्वादशाङ्गुलशङ्कोश्छायात
इष्टकालसाधनमात्रं प्रदर्शितम्। भास्करेणाऽस्यानेके प्रकारास्तस्करवदपहृताः।
अहो अस्य सुप्रसिद्धस्य भास्करादितोऽपि प्राचीनस्य विदुषोऽन्यकृति-
दर्शनमन्तरा समये महान् संशयः।

प्राचीना एकशास्त्रमात्रैकवेदिनो नाऽऽसन् ते च बहुश्रुता बहुविषयवे-
त्तार आसन्नत्र न संशयः ( रामदैवज्ञवर्णनं विलोक्यम्)। अतो यदि *
न्यायकन्दलीकर्त्ता श्रीधरश्चायमेव। तदाऽस्य माता अव्वोका नाम्नी पिता
बलदेवशर्म्मा मूलस्थानं च वङ्गदेशान्तर्गते गङ्गायाः पश्चिमे तटे राढदेशे
भूरिश्रेष्ठिक इति प्रसिद्धे भूरिसृष्टिग्रामे। भट्टाचार्यत्वाद्वङ्गदेशीयो, न दाक्षि-
णात्यः। श्रीधरेण पाण्डुदासप्रार्थनया न्यायकन्दलीत्रीन्दुनवमिते ९१३ शके
रचिताऽतः स एव शकोऽस्य समयो भास्करतोऽपि प्राचीनद्योतको नाऽसम्भ-
वः। न्यायकन्दलीसमाप्तौ

"त्र्यधिकदशोत्तरनवशतशाकाब्दे ९१३ न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम्" ॥

इति लेखस्य शुष्कनैयायिकानामसम्भवात् प्रायो ज्यौतिषशास्त्रवेत्ता स
एवायं श्रीधर इति मत्कल्पनं नाहो असम्भवम्।

न्यायकन्दलीसमाप्तौ

आसीद् दक्षिणराढायां द्विजानां भूरिकर्म्मणाम्।
भूरिसृष्टिरितिग्रामो भूरिसृष्टिजनाश्रयः ॥

* बनारससंस्कृतसीरिजनाम्नि मुद्रितस्य सभाष्यवैशेषिकदर्शनस्य विज्ञापनं श्रीविन्ध्येश्वरी-
प्रसादद्विवेदिकृत विलोक्यम्।



अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः।
जगदानन्दनाद्वन्द्यो बृहस्पतिरिव द्विजः ॥
तस्माद्विशुद्धगणरत्नमहासमुद्रो
विद्यालतासमवलम्बनभूरुहोऽभूत्।
स्वच्छाशयो विविधकीर्त्तिनदीप्रवाह--
स्वान्त--सम्पद्बहुलो ? बलदेवनामा ॥
तस्याऽभूद्भूरियशो विशुद्धकुलसम्भवा।
अव्वोकेत्यर्च्चितगुणा गुणिनी गृहमेधिनी ॥
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः।
तस्याः श्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत् ॥
असौ विद्याविदग्धानामसूत श्रवणोचिताम्।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम् ॥
त्र्यधिकदशोत्तरनवशतशाकाब्दे ९१३ न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम् ॥

## पद्मनाभमिश्रः।

यमुनापुरनिवासी गङ्गादासपौत्रः कृष्णदेवतनयः संहितामुहूर्त्तरूपं
व्यवहारप्रदीपं व्यधात्। इदं दुर्लभं पुस्तकं मया बहुनाऽऽयासेन काश्यां
ज्योतिर्विच्छ्रीश्यामाचरणगेह आसाद्य काशिकराजकीयपुस्तकालये स्थाप-
नार्थं पञ्चाष्टाष्टभूमिते १८८५ खीष्टशके तदीया प्रतिः खण्डितान्ता
लेखकद्वारोत्पादिता।

अत्रादौ

अशेषजगदेज्ञानतिमिरौघरविप्रभा।
तनोतु शारदा सिद्धिमुद्यमे विदुषां सदा ॥
यमुनापुराभिधानं नगरं भूलोकविश्रुतं जयति।
क्ष्मातलमिवावतीर्णः स्वर्ग्गः साक्षाद्विलोक्यते मनुजैः ॥
तत्राऽभवद्द्विजवरः परमप्रतिष्ठापात्रं यशोनिधिरशेषगुणानुरागी।
विद्यातपोविनयकीर्त्त्यतुलः पृथिव्यां सन्तोषकृद्गुणवतां शिवदासनामा॥
शिवदासात्मजः श्रीमान् गङ्गादासो गुणावधिः।
आसीद् द्विजवरः पृथ्वीपालमालार्चितः सदा ॥

क्षेत्रव्यवहारे आद्ये जात्यत्रिभुजे भुजकोटिवर्गयोगः कर्णवर्गो भवती-
त्यस्य सिद्धान्तस्य न चर्चा समानान्तरचतुर्भुजे यस्य ऋजुवदनचतुर्भुज-
मिति संज्ञा कृता लम्बाबाधानयने च सिद्धान्तः कथितः। व्यासवर्गाद्दशगु-
णात्पदं परिधिः। ततो वृत्तक्षेत्रफलं परिधिव्यासघातचतुर्थांशसममेवानीतम्।
वृत्तपृष्ठघनफलचर्चा न कुत्रापि। वृत्तचापक्षेत्रस्य फलं च

"जीवाशरैक्यदलहतशरस्य वर्गं दशाहतं नवभिः।
विभजेदवाप्तमूलं प्रजायते कार्मुकस्य फलम्"

इत्यनेन साधितम्। खातव्यवहारे च सूचीघनं साधितं वापीघनफलं च

"मुखतलतद्योगानां वर्गैक्यकृतेः पदसंगुणायाः।
वेधगुणं चतुरन्वितविंशतिभक्तं फलं कूपे" ॥

इत्यनेन विलक्षणं साधितम्। छायाव्यवहारे द्वादशाङ्गुलशङ्कोश्छायात
इष्टकालसाधनमात्रं प्रदर्शितम्। भास्करेणाऽस्यानेके प्रकारास्तस्करवदपहृताः।
अहो अस्य सुप्रसिद्धस्य भास्करादितोऽपि प्राचीनस्य विदुषोऽन्यकृति-
दर्शनमन्तरा समये महान् संशयः।
प्राचीना एकशास्त्रमात्रैकवेदिनो नाऽऽसन् ते च बहुश्रुता बहुविषयवे-
त्तार आसन्नत्र न संशयः ( गमदैवज्ञवर्णनं विलोक्यम् )। अतो यदि *
न्यायकन्दलीकर्त्ता श्रीधरश्चायमेव। तदाऽस्य माता अव्वोका नाम्नी पिता
बलदेवशर्म्मा मूलस्थानं च वङ्गदेशान्तर्गते गङ्गायाः पश्चिमे तटे राढदेशे
भूरिश्रेष्ठिक इति प्रसिद्धे भूरिसृष्टिग्रामे। भट्टाचार्यत्वाद्वङ्गदेशीयो, न दाक्षि-
णात्यः। श्रीधरेण पाण्डुदासप्रार्थनया न्यायकन्दलीत्रीन्दुनवमिते ९१३ शके
रचिताऽतः स एव शकोऽस्य समयो भास्करतोऽपि प्राचीनद्योतको नाऽसम्भ-
वः। न्यायकन्दलीसमाप्तौ

"त्र्यधिकदशोत्तरनवशतशाकाब्दे ९१३ न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम्" ॥

इति लेखस्य शुष्कनैयायिकानामसम्भवात् प्रायो ज्यौतिषशास्त्रवेत्ता स
एवायं श्रीधर इति मत्कल्पनं नाहो असम्भवम्।

न्यायकन्दलीसमाप्तौ

आसीद् दक्षिणराढायां द्विजानां भूरिकर्म्मणाम्।
भूरिसृष्टिरितिग्रामो भूरिसृष्टिजनाश्रयः॥

* बनारससंस्कृतसीरिजनाम्नि मुद्रितस्य सभाष्यवैशेषिकदर्शनस्य विज्ञापनं श्रीविन्ध्येश्वरीप्रसादद्विवेदिकृत विलोक्यम्।



अम्भोराशेरिवैतस्माद्बभूव क्षितिचन्द्रमाः।
जगदानन्दनाद्वन्द्यो बृहस्पतिरिव द्विजः॥
तस्माद्विशुद्धगणरत्नमहासमुद्रो
विद्यालतासमवलम्बनभूरुहोऽभूत्।
स्वच्छाशयो विविधकीर्त्तिनदीप्रवाह--
स्वान्त--सम्पद्बहुलो ? बलदेवनामा॥
तस्याऽभूद्भूरियशो विशुद्धकुलसम्भवा।
अव्वोकेत्यर्चितगुणा गुणिनी गृहमेधिनी॥
सच्छायः स्थूलफलदो बहुशाखो द्विजाश्रयः।
तस्याः श्रीधर इत्युच्चैरर्थिकल्पद्रुमादभूत॥
असो विद्याविदग्धानामसूत श्रवणोचिताम्।
षट्पदार्थहितामेतां रुचिरां न्यायकन्दलीम्॥
ऽयधिकदशोत्तरनवशतशाकाब्दे ९१३ न्यायकन्दली रचिता।
श्रीपाण्डुदासयाचितभट्टश्रीश्रीधरेणेयम्॥

## पद्मनाभमिश्रः।

यमुनापुरनिवासी गङ्गादासपौत्रः कृष्णदेवतनयः संहितामुहूर्त्तरूपं व्यवहारप्रदीपं व्यधात्। इदं दुर्लभं पुस्तकं मया बहुनाऽऽयासेन काश्यां ज्योतिर्विच्छ्रीश्यामाचरणगेह असाद्य काशिकराजकीयपुस्तकालये स्थापनार्थं पञ्चाष्टाष्टभूमिते १८८५ खीष्टशके तदीया प्रतिः खण्डितान्ता लेखकद्वारोत्पादिता।

अत्रादौ

अशेषजगदेज्ञानतिमिरौघरविप्रभा।
तनोतु शारदा सिद्धिमुद्यमे विदुषां सदा॥
यमुनापुराभिधानं नगरं भूलोकविश्रुतं जयति।
क्ष्मातलमिवावतीर्णः स्वर्गः साक्षाद्विलोक्यते मनुजैः॥
तत्राऽभवद्द्विजवरः परमप्रतिष्ठापात्रं यशोनिधिरशेषगुणानुरागी।
विद्यातपोविनयकीर्त्यतुलः पृथिव्यां सन्तोषकृद्गुणवतां शिवदासनामा॥
शिवदासात्मजः श्रीमान् गङ्गादासो गुणावधिः।
आसीद् द्विजवरः पृथ्वीपालमालार्चितः सदा॥

गङ्गादासः सुमतिरमितख्यातिवेदादिविद्या-
नित्याचारव्रतनियमवान् श्रीनृसिंहाङ्घ्रिभक्तः ।
पुत्रः पृथ्व्यामखिलगुणिना माननीयैः स्वपुण्यै-
राप्तो येन प्रथितयशसा कृष्णदेवाभिधानः ॥
कृष्णदेव इति नामसमेतं प्राप यस्तनयमेव निधानम् ।
वेदशास्त्रसुकृतोपकृतीनां य सदास्थित हृदये सुकृतीनाम् ॥
वेदशास्त्रसुकृतोपकृतीनां य सदास्थित हृदये सुकृतीनाम् ॥
ज्ञात्वाखिलं ब्रह्म विहाय मिथ्या यः केवलं ब्रह्मनिविष्टबुद्धिः ।
ज्ञात्वा स्वकायं जपयज्ञपूतं तत्याज काश्यामतुलप्रभावः ॥
तच्चरणाम्बुजरेणोः प्रसादमासाद्य तत्सुतो गुणवान् ।
किल पद्मनाभनामा कुरुते व्यवहारदीपाख्यम् ॥
मतान्यालोक्य पूर्वेषां मुनीनां शास्त्रचेतसाम् ।
व्यवहारप्रदीपाख्यो ग्रन्थोऽस्माभिर्विरच्यते ॥

१७ श्लोकः

तुष्यन्तु सुजना बुद्ध्वा विशेषान् मदुदीरितान् ।
अबोधेन हसन्तो मां स्वतस्तुष्यन्तु दुर्ज्जनाः ॥

( सिद्धान्तशिरोमणिगणिताध्यायमध्यमाधिकारस्य ५ श्लोकस्तत्रान्ते "तोषमेष्यन्ति दुर्जनाः" इति पाठभेदः )

१९ श्लोकस्याग्रे
तथा शौनकसंहितायाम्

दिव्यं ज्ञानमतीन्द्रियं यदृषिभिर्ब्राह्मं वसिष्ठादिभिः
पारंपर्यवशाद्रहस्यमवनीं नीतं प्रकाश्यं पुनः ।
नैतद्द्वेषिकृतघ्नदुर्जनदुराचाराचिरावासिने
स्यादायुःसुकृतक्षयो मुनिकृतां सीमामिमामुज्झतः ॥

( भास्करीयगोलाध्यायच्छेद्यकाधिकारस्य ९ श्लोकोऽयम् ) ततोऽग्रे "तथा च बार्हस्पत्ये

स्कन्धत्रयात्मकं शास्त्रमाद्यं सिद्धान्तसंज्ञितम् ।
द्वितीयं जातकं स्कन्धं तृतीयं संहिताह्वयम् ॥
शतन्यूने सहस्राणां चतुष्के तु कलौ युगे ।
विन्ध्यादुत्तरदेशे स्यान्मूलागमपरिक्षयः ॥



यस्य यस्य गृहे सन्ति ग्रन्थाः स्वल्पाश्च कृत्रिमाः ।
त एव पण्डितंमन्याः सम्प्रदायविवर्जिताः ॥
उदितेनास्तगेनापि चन्द्रेणैव भविष्यति ।
ज्ञानं प्रतिपदादीनां तिथीनामपि दुर्लभम् ॥

तत्रैवात्रिः

विन्ध्यस्योत्तरभागे तु सम्प्राप्ते तु कलौ युगे ।
सिद्धान्तादिपरं ज्ञानं न कस्यापि भविष्यति ॥

तथा च व्याससंहितायाम्

सम्प्राप्ते तु कलेः काले विन्ध्याद्रेरुत्तरे स्थिताः ।
ब्राह्मणा यज्ञरहिता ज्योतिःशास्त्रपराङ्मुखाः" ॥

ततोऽग्रे "तथा चोक्तं वसिष्ठेन

छान्दःपादौ शब्दशास्त्रं च वक्त्रं
कल्पः प्राणो ज्यौतिषं चक्षुषी च ।
शिक्षा घ्राणं श्रोत्रमुक्तं निरुक्तं
वेदस्याङ्गान्याहुरेतानि षट् च" ॥

ततोऽग्रे "तथा चोक्तं वासिष्ठे

यो वेद वेदनयनं सदनं हि सम्यग्
ब्राह्मयाः स वेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी" ॥

( भास्करीयगोलाध्यायस्य ८ श्लोकोऽयं तत्र वेदनयनमित्यत्र वेदवदनमिति पाठं कृत्वा भास्करेण व्याकरणप्रशंसा कृता ) ।
ततोग्रे "तथा च चन्द्रिकायां

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिःशास्त्रं शिरःस्थितम्" ॥

( ज्यौतिषवेदाङ्गस्यायं श्लोकस्तत्र गणितं मूर्द्धनि स्थितम् इति पाठः ) ।

एवमत्र भीमपराक्रमस्य, श्रीपतिरत्नमालायाः, वराहमिहिरस्य, दीपिकायाः, लल्लसंहितायाः, सूर्यसिद्धान्तस्य, खण्डखाद्यस्य, सारावल्याः, रूपनारायणस्य, राजमार्त्तण्डस्य, सारसागरस्य. देवलस्य, रत्नावल्याः, ज्योति-

स्तन्त्रस्य, व्यवहारचण्डेश्वरस्य, वामनपुराणस्य, स्कन्दपुराणस्य, ब्रह्म-
सिद्धान्तस्य, मुक्तावल्याः, व्याघ्रपादस्य, काठकगृह्यस्य, भारद्वाजसंहितायाः,
कश्यपसंहितायाः, मणित्थस्य, जैमिनेः, विष्णुधर्मोत्तरस्य, मरीचिऋषेः,
वायुपुराणस्य च वचनान्युपलभ्यन्ते ।

अत्र वराहादीनां यानि वचनानि लिखितानि तानि च वराहादिकृत-
संहितादिग्रन्थेषु चोपलभ्यन्ते ।

तथात्र यानि सूर्यसिद्धान्तवचनानि तानि सम्प्रति प्रसिद्धसूर्यसिद्धान्त-
स्य । वराहवचनानि बृहत्संहितास्थानि प्रायः परन्तु विष्कम्भादियोगशुभा-
शुभकथने पाठशालीयपुस्तकस्य २२ पत्रे "यत्त्वविरुद्धसंज्ञस्यापि हर्षणस्य
लल्लेन निषेधः कृतस्तन्महाव्यतिपातशङ्कया तथा च विवाहपटले वराहः

व्यतिपातहते दिनत्रयं व्यतिपातेन समं च वैधृतिम् ।
तदपि स्फुटपातदर्शनाद् द्विगुणं तद्यदि वा सुनिश्चितम्" ॥

इति वचनं च बृहत्संहितास्थविवाहपटलनाम्न्यध्याये नास्ति तेन विवा-
हपटलाख्यैव वराहस्य विवाहकालादिनिर्णयात्मिकाऽन्याकृतिः प्राचीनकालतः
प्रसिद्धात्र न संशयः ।

एवमधिमासादिनिर्णये पाठशालीयपुस्तकस्य ७२ पत्रे "तदुक्तं ज्यो-
तिस्तन्त्रे

असङ्क्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्या-
त्तदा वर्षमध्येऽधिमासद्वयं स्यात्" ॥

इत्ययं श्लोको विलिखितोऽस्ति स च भास्करीयगणिताध्यायमध्यमा-
धिकारस्य ६ श्लोकः ।

एवं चात्र भास्करीयसिद्धान्तशिरोमणिस्थवचनानि सर्वत्रान्यग्रन्थ-
नाम्ना लिखितानीति महच्चित्रम् । भास्करेण तत्तद्ग्रन्थेभ्योऽपहृतानि तानि
चेत्यवगम्यते । येषां ग्रन्थानां नामानि पद्मनाभेन लिखितानि तेषां
मध्ये ये बृहत्संहितादिग्रन्थाः प्रसिद्धास्तत्रस्थपद्मनाभलिखितानि वच-
नानि सत्यान्येव तेनाप्रसिद्धानामपि वचनानि तथ्यान्यवश्यं भविष्यन्तीति



स्फुटमनुमीयते पद्मनाभनिभस्य बहुश्रुतस्य तथ्यलेखसमौचित्यात् । ततो
भास्करेण तानि वचनानि तेभ्योऽपहृतान्यत्र * न संशयः ।

एवं वर्जनीयदिनप्रकरणे पाठशालीयपुस्तकस्य ७० पत्रे 'ब्रह्मसिद्धान्ते

वर्षान्ते वर्जयेत्पक्षं मासान्ते च दिनत्रयम् ।
घटिकाद्वयमृक्षान्ते ग्रहणे सप्तवासरम्" ॥

इति ब्रह्मसिद्धान्तीयं वचनं ज्ञाताद्विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्तात्तथा
शाकल्यसंहितान्तर्गतब्रह्मसिद्धान्ताद्भिन्नं फलकीर्त्तनपरं विलक्षणम् ।

अहो बहुविशेषयुक्तस्य व्यवहारप्रदीपस्यान्तभागो न दृष्टो मया तद्दर्शनं
विना ग्रन्थकृतः समयो न विज्ञायते । अस्य पद्मनाभस्य समयज्ञानं विना
यस्य भास्करः स्वबीजान्ते "ब्रह्माह्वयश्रीधरपद्मनाभबीजानि" त्यादौ
नाम लिखति स एवायं वाऽन्य इति वक्तुं न शक्यते । व्यवहारप्रदीपं प्रका-
शयति चास्य पद्मनाभस्य ज्यौतिषस्कन्धत्रये काव्यसाहित्ययोश्च पूर्णं
पाण्डित्यम् । भोजराजकृतराजमार्त्तण्डवचनोल्लेखादयं भोजराजतो न
प्राचीन इति सिध्यति ॥

अध्यायसमाप्तौ नाम्नि मिश्रपदोल्लेखादयं मिश्र इति विज्ञायते । अयं
च स्वकीर्त्तिविस्तारार्थं ग्रन्थं कृतवान् इति व्यवहारप्रदीपस्य १३ श्लोकेन

"कीर्त्तिवल्ली कथं लोकक्षेत्रे तस्याऽस्तु विस्तृता ।
योऽक्षरस्तम्भयोगेन मञ्चं बद्ध्वा न यच्छति" ॥ इत्यनेन स्फुटम् ।

इतिहासरसिकैर्विद्वद्भिरस्य व्यवहारप्रदीपाख्या कृतिर्यत्नतः सम्पूर्णा-
न्वेषणीया ।

## श्रीपतिः । ९२१

बहुभिरयं श्रीपतिभट्ट इति कथ्यते । अयं भारतवर्षे त्रिस्कन्धज्यौतिष-
शास्त्रेषु स्वसमयेऽद्वितीयः पण्डित आसीत् । मुनीश्वरेण भास्करीयलीला-
वतीटीकायां निसृष्टार्थदूत्यभिधायां "चापोननिघ्नपरिधिः प्रथमाह्वयः
स्या"दित्यादिव्याख्यायां ।

"दोःकोटिभागरहिताभिहताः खनाग-
चन्द्रास्तदीयचरणोनशरार्कदिग्भिः ।
ते व्यासखण्डगुणिता विहृताः फलं तु
ज्याभिर्विनापि भवतो भुजकोटिजीवा" ॥

* लग्नानयने पाठशालीयपुस्तकस्य २९ पत्रे यानि भास्करीयकरणकुतूहलवच-
नानि तानि च केनचित्प्रक्षिप्तानि तदग्रे खण्डखाद्यविधिना पुनर्लग्नानयनस्योल्लेखात् ।

स्तन्त्रस्य, व्यवहारचण्डेश्वरस्य, वामनपुराणस्य, स्कन्दपुराणस्य, ब्रह्म-सिद्धान्तस्य, मुक्तावल्याः, व्याघ्रपादस्य, काठकगृह्यस्य, भारद्वाजसंहितायाः, कश्यपसंहितायाः, मणित्थस्य, जमिनेः, विष्णुधर्म्मोत्तरस्य, मरीचिऋषेः, वायुपुराणस्य च वचनान्युपलभ्यन्ते ।

अत्र वराहादीनां यानि वचनानि लिखितानि तानि च वराहादिकृत-संहितादिग्रन्थेषु चोपलभ्यन्ते ।

तथात्र यानि सूर्यसिद्धान्तवचनानि तानि सम्प्रति प्रसिद्धसूर्यसिद्धान्त-स्य । वराहवचनानि बृहत्संहितास्थानि प्रायः परन्तु विष्कम्भादियोगशुभा-शुभकथने पाठशालीयपुस्तकस्य २२ पत्रे "यत्त्वविरुद्धसंज्ञस्यापि हर्षणस्य लल्लेन निषेधः कृतस्तन्महाव्यतिपातशङ्कया तथा च विवाहपटले वराहः

व्यतिपातहते दिनत्रयं व्यतिपातेन समं च वैधृतिम् ।
तदपि स्फुटपातदर्शनाद् द्विगुणं तद्यदि वा सुनिश्चितम्" ॥

इति वचनं च बृहत्संहितास्थविवाहपटलनाम्न्यध्याये नास्ति तेन विवा-हपटलाख्यैव वराहस्य विवाहकालादिनिर्णयात्मिकाऽन्याकृतिः प्राचीनकालतः प्रसिद्धात्र न संशयः ।

एवमधिमासादिनिर्णये पाठशालीयपुस्तकस्य ७२ पत्रे "तदुक्तं ज्यो-तिस्तन्त्रे

असङ्क्रान्तिमासोऽधिमासः स्फुटः स्याद्
द्विसंक्रान्तिमासः क्षयाख्यः कदाचित् ।
क्षयः कार्त्तिकादित्रये नान्यतः स्या-
त्तदा वर्षमध्येऽधिमासद्वयं स्यात्" ॥

अयं श्लोको विलिखितोऽस्ति स च भास्करीयगणिताध्यायमध्यमा-धिकारस्य ६ श्लोकः ।

एवं चात्र भास्करीयसिद्धान्तशिरोमणिस्थवचनानि सर्वत्रान्यग्रन्थ-नाम्ना लिखितानीति महच्चित्रम् । भास्करेण तत्तद्ग्रन्थेभ्योऽपहृतानि तानि चेत्यवगम्यते । येषां ग्रन्थानां नामानि पद्मनाभेन लिखितानि तेषां मध्ये ये बृहत्संहितादिग्रन्थाः प्रसिद्धास्तत्रस्थपद्मनाभलिखितानि वच-नानि सत्यान्येव तेनाप्रसिद्धानामपि वचनानि तथ्यान्यवश्यं भविष्यन्तीति



स्फुटमनुमीयते पद्मनाभनिभस्य बहुश्रुतस्य तथ्यलेखसमौचित्यात् । ततो भास्करेण तानि वचनानि तेभ्योऽपहृतान्यत्र * न संशयः ।

एवं वर्जनीयदिनप्रकरणे पाठशालीयपुस्तकस्य ७० पत्रे 'ब्रह्मसिद्धान्ते

वर्षान्ते वर्जयेत्पक्षं मासान्ते च दिनत्रयम् ।
घटिकाद्वयमृक्षान्ते ग्रहणे सप्तवासरम्" ॥

इति ब्रह्मसिद्धान्तीयं वचनं ज्ञाताद्विष्णुधर्मोत्तरान्तर्गतब्रह्मसिद्धान्तात्तथा शाकल्यसंहितान्तर्गतब्रह्मसिद्धान्ताद्भिन्नं फलकीर्त्तनपरं विलक्षणम् ।

अहो बहुविशेषयुक्तस्य व्यवहारप्रदीपस्यान्तभागो न दृष्टो मया तद्दर्शनं विना ग्रन्थकृतः समयो न विज्ञायते । अस्य पद्मनाभस्य समयज्ञानं विना यस्य भास्करः स्वबीजान्ते "ब्रह्माह्वयश्रीधरपद्मनाभबीजानि" त्यादौ नाम लिखति स एवायं वाऽन्य इति वक्तुं न शक्यते । व्यवहारप्रदीपं प्रका-शयति चास्य पद्मनाभस्य ज्यौतिषस्कन्धत्रये काव्यसाहित्ययोश्च पूर्णं पाण्डित्यम् । भोजराजकृतराजमार्त्तण्डवचनोल्लेखादयं भोजराजतो न प्राचीन इति सिध्यति ॥

अध्यायसमाप्तौ नाम्नि मिश्रपदोल्लेखादयं मिश्र इति विज्ञायते । अयं च स्वकीर्त्तिविस्तारार्थं ग्रन्थं कृतवान् इति व्यवहारप्रदीपस्य १३ श्लोकेन

"कीर्त्तिवल्ली कथं लोकक्षेत्रे तस्याऽस्तु विस्तृता ।
योऽक्षरस्तम्भयोगेन सम्यं बद्ध्वा न यच्छति" ॥ इत्यनेन स्फुटम् ।

इतिहासरसिकैर्विद्वद्भिरस्य व्यवहारप्रदीपाख्या कृतिर्यत्नतः सम्पूर्णा-न्वेषणीया ।

## श्रीपतिः । ९२१

बहुभिरयं श्रीपतिभट्ट इति कथ्यते । अयं भारतवर्षे त्रिस्कन्धज्यौतिष-शास्त्रेषु स्वसमयेऽद्वितीयः पण्डित आसीत् । मुनीश्वरेण भास्करीयलीला-वतीटीकायां निसृष्टार्थदूत्यभिधायां "चापोननिघ्नपरिधिः प्रथमाह्वयः स्या"दित्यादिव्याख्यायां ।

"दोःकोटिभागरहिताभिहताः खनाग-
चन्द्रास्तदीयचरणोनशरार्कदिग्भिः ।
ते व्यासखण्डगुणिता विहृताः फलं तु
ज्याभिर्विनापि भवतो भुजकोटिजीवा" ॥

* खण्डानयने पाठशालीयपुस्तकस्य २६ पत्रे यानि भास्करीयकरणकुतूहलव-चनानि तानि च केनचित्प्रक्षिप्तानि तदग्रे खण्डखाद्यकविधिना पुनर्लेखानयनस्योल्लेखात् ।

तथा सर्वदोर्युतिदलं चतुःस्थितमित्यादिव्याख्यायां

तथा सर्वदोर्युतिदलं चतुःस्थितं निजभुजैः क्रमशः पृथगूनितम्।
"भुजसमासदलं हि चतुःस्थितं तदाहतेः कृतपदं त्रिबतुर्भुजयोः फलम्" ॥

अथ परस्परमेव तदाहतेः कृतपदं त्रिबतुर्भुजयोरपि इति तथाऽन्यत्र बहुत्र श्रीपतिवचनानि लिखितानि तेन पाटीबीजयोरपि कृतिरस्त्यस्य इति बुध्यते। ज्याखण्डैर्विना चापादेव ज्यानयनं श्रीपतिकृतं यत्पूर्वं प्रतिपादितं तदवलम्ब्यैव गणेशदैवज्ञेन ग्रहलाघवे सर्वे प्रकारा विना द्युति-विलिखिताः। "इति कृतं लघु कार्म्मुकशिञ्जिनीग्रहणकर्म विना द्युतिहेतुश्चात्र साधन" मिति भास्करीयकरणकुतूहलस्थच्छायासाधनाभिमानमूलहेतुश्चात्र (मत्कृता करणकुतूहलोपपत्तिर्विलोक्या)। एवं गणिता-श्रीपतिप्रकार एव (मत्कृता करणकुतूहलोपपत्तिर्विलोक्या)। एवं गणिता-ध्यायस्य पाताधिकारे "त्रिनवभवनजातेति स्वोक्तसिद्धान्तशेखरोक्तल-ध्यायस्य पाताधिकारे "त्रिनवभवनजातेति भास्कराचार्योक्तेन ज्यौतिषसिद्धान्तेऽपि क्षणेनापि पातो गत" इति भास्कराचार्योक्तेन ज्यौतिषसिद्धान्तेऽपि पाटवमस्य ज्ञायते।

अहो एतादृशस्य ज्यौतिषशास्त्राद्वितीयविदुषः पाटीगणितं, बीजगणितं, *सिद्धान्तशेखरनामको ज्यौतिषसिद्धान्तश्चेति सर्वं विनष्टम्। न कुत्राप्युप-लभ्यते। श्रीपतिपद्धतिर्जातके मुहूर्त्ते रत्नावली, रत्नसारः, रत्नमाला चेति कृतिचतुष्टयं ज्योतिर्विदां गृहे गृहे सर्वत्रैव किमपि मुद्रितं चोपलभ्यते परन्तु तत्र समयादिकवर्णनं नास्ति। दैववशात् काश्यामेव चन्द्रसूर्यग्रहण-साधनरूपं धीकोटिसंज्ञं करणमस्माभिरुपलब्धमेतत्कृतम्। इदं धीकोटिसंज्ञं करणं यच्चास्माभिरुपलब्धं सं० १९१६ विक्रमाब्दे लिखितं तत्रादौ "चन्द्राङ्गनन्दो ९६१ नशकोऽर्कनिघ्नश्चैत्रादिमासैर्युगधो द्विनिघ्नः"। इत्यादि वाक्येन करणकालो रूपरसनन्दशकः ९६१ सिध्यति। तस्मिन् समये यदि श्रीपतिवयश्चत्वारिंशद्वर्षसमं कल्प्यते तदाऽस्य जन्मासन्नशकः ९२१ सिध्यति। इदं करणं श्लोकशतसंख्यमुदाहरणसहितमस्ति। उदाहरणं च रसाष्टपञ्चेन्दु १५८६ शकीयं तत्कृतनामरहितं वर्त्तते। प्रायः करणका-

* शाके १८५४ कलिकाता-विश्वविद्यालयस्थ-मुद्रणालयात् श्रीपतिप्रणीतः सिद्धान्त-शेखर आदितश्चतुर्थाध्यायपञ्चसप्ततिश्लोकपर्यन्तं मक्किभट्टकृतगणितभूषणाख्यटीकया तत्परश्च संशोधककृतसिद्धान्तशेखरविवरणाख्यटीकया सहितः श्रीकृष्णमिश्रापरनाममैथिलश्रीबबुआजिमिश्रेण ज्यौतिषतीर्थ-ज्यौतिषाचार्य-पदवीमता कलिकातामहानगरीस्थविश्वविद्यालये प्राचीनगणितज्यौतिषा-ध्यापकेन संशोध्य प्राकाश्य नीतः।

श्रीपतिकृत'ध्रुवमानसाख्य'करणग्रन्थस्थेन श्लोकेन "भट्टकेशवपुत्रस्य नागदेवस्य नन्दनः। श्रीपती रोहिणीखण्डे ज्यौतिःशास्त्रमिदं व्याधात्"। इत्यनेन ग्रन्थरचनास्थानं रोहिणीखण्डमर्थात् कपिलवस्तुनगरी वा नेपालोपत्यका यत्र रोहिणी नदी वहतीति सम्पादकमतम्।



लस्तथ्य एव विभाति भास्कराचार्यसमयादपि प्राचीनत्वात्। अयमतीव सज्जनो निष्पक्षपातरहितः काव्यसाहित्यादिषु निपुण आसीदिति तत्कृतर-त्नमालाविलोकनेन ज्ञायते।

रत्नमालान्ते

भ्रातरद्यतनविप्रनिर्मितं शास्त्रमेतदिति मा वृथा त्यज।
आगमोऽयमृषिभाषितोपमो नापरं किमपि भाषितं मया ॥

अत्र सप्तदशप्रकरणे वास्तुवर्णने योगेश्वराचार्यमतं लिखितं तथाऽऽदौ द्वितीयश्लोके "विलोक्य गर्गादिमुनिप्रणीतं वराहलल्लादिकृतं च शास्त्र"मित्यादि लिखितमस्ति। वराहादिभ्योऽनन्तरं पूर्वप्रतिपादितशकोऽस्य समयः समुचित एव।

## भोजराजः। ९६४

फलितेऽस्य कृती राजमार्त्तण्डाख्या, योगशास्त्रे पातञ्जलयोगसूत्र-वृत्तिश्च प्राप्यते परन्तु तत्र समयादिकं न। पातञ्जलयोगसूत्रवृत्तिसमाप्तौ "रणरङ्गमल्ल" इति राज्ञो विशेषणमुपलभ्यते। डाक्टरभाऊदाजीलेखानु-सारेण भोजराजकृतं गणिते राजमृगाङ्ककरणं चास्ति यस्यैका प्रतिः जेस्सुलमेर–(Jessulmere) स्थानस्थपण्डितद्वारा तेन लब्धा च तत्रापि समाप्तौ योगसूत्रवृत्तिवद्राज्ञो विशेषणमहर्गणानयनं च वेदरसनवोमितात् ९६४ शकात्। तेनैवास्य समयः स एव शकः कल्प्यते (See The Literary Remains of Dr. Bhau Daji, p. 246.)

कोलब्रूकसाहिबनिकटे डाक्टरविलियमहण्टरसाहबेनोज्जयिनीस्थज्यो-तिर्विदां समयावली या प्रेषिता तत्रापि भोजराजसमयः स एव शकः। (Colebrooke's Algebra, p. XXXIII.) अयं भोजो धारानगरी-मलङ्कुर्व्वन् संस्कृतविद्याप्रधानरसिकः संस्कृतविद्वन्मण्डलीसंमानरत्नोऽ-द्वितीयो महीमहेन्द्र आसीत्। यद्विषये च कवयो बहुधा विचित्ररचनाप्रप-ञ्चचातुरीभिरितिहासादिकं वर्णयामासुः। राजमृगाङ्ककरणपुस्तकमद्यावधि न मया दृष्टम्।

## ब्रह्मदेवः। १०१४

आसीच्चन्द्रदेवतनयो माथुरो ब्राह्मणोऽयम्। एनेनाऽऽर्यभटानुसारेण शक्रदिङ्मिते १०१४ शके करणप्रकाशनामकं करणं विरचितम्। अत्र मध्य-माधिकारः, तिथ्यधिकारः, स्पष्टाधिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणा-धिकारः, सूर्यग्रहणाधिकारः, उदयास्ताधिकारः, शृङ्गोन्नत्यधिकारः,

संक्षेपतो विलिखिताः सन्ति २२५ श्लोकैः । इति नवाधिकाराः ग्रहयुत्यधिकारः ।

माध्व * मतीया एतत्करणानुसारेणागतान् तिथ्यादीन् व्रतोपवासादिषु स्वीकुर्वन्ति । ब्रह्मदेवस्यान्या कृतिरस्माभिर्नोपलब्धा । करणप्रकाशकस्या-तीव दुर्मिलं लिखितपुस्तकं शुद्धं प्राचीनं च काशिकराजकीयपाठशालासर-स्वतीभवने वर्त्तते ।

तत्रादौ

"ब्रह्माच्युतत्रिनयनार्कशशाङ्कभौम-
सौम्येज्यशुक्रशनिवागधिपागणेशान् ।
नत्वाहमार्यभटशास्त्रसमं करोमि
श्रीब्रह्मदेवगणकः करणप्रकाशम्" ॥

इदं मङ्गलं "ब्रह्मकुशशिबुधे" त्याद्यार्यभटोक्तमङ्गलानुरूपमेवेति स्फुटम् ।

तदन्ते च

'आसीत्पार्थिववृन्दवन्दितपदाम्भोजद्वयो माथुरः
श्रीचन्द्राख्यबुधो गुणैकवसतिः ख्यातो द्विजेन्द्रः क्षितौ ।
नत्वा तस्य सुताऽङ्घ्रिपङ्कजयुगं खण्डेन्दुचूडामणे-
र्वृत्तैः स्पष्टमिदं चकार करणं श्रीब्रह्मदेवः कृती" ॥

यद्यप्ययं ग्रन्थारम्भे स्वकीयं करणमार्य्यभटानुसारीति विलिलेख तथापि ग्रन्थस्य सूक्ष्मधियाऽवलोकनेन बहुत्रान्यथा प्रतिभाति बहुत्र लल्लोक्तसदृश-मेव । अत्रायनभागचर्चा न कुत्रापि दृश्यते ।

राशिद्वयं स्वदेशीयाक्षभागहीनं शेषसमे भानावगस्त्योऽस्तमुपैति । भषट्कमस्तार्कहीनमवशेषसमे द्युमणौ चोदयं व्रजति कुम्भज इति रीति-र्वर्त्तत अगस्त्यास्तोदयसाधने ह्यत्र । अनेन विधिनाऽवन्तिकायां सार्द्धद्विद्वि-पलभागपुर्य्यां यदा रविः = रा. १ । ७° । ३०' तदाऽगस्त्यास्तः ॥ यदा च रविः = रा ६ — ( रा १ । ७° । ३०' ) = रा ४ । २२° । ३०' तदा-गस्त्योदयः । अयमुदयश्च बृहत्संहितोक्तेन "तच्चोज्जयिन्यामगतस्य

* माध्वसाम्प्रदायिककृष्णामृतवाक्यार्थे ।

"विष्णोश्च जन्मदिवसानि हरेर्दिनं च विष्णुव्रतानि विविधानि च विष्णुमं च । कार्याणि चार्यभटशास्त्रत एव सर्वं" रित्यादि तथा "आर्यभटसिद्धान्तसंमतकरणप्रकाशग्रंथः" इति ।



कन्यां भागैः स्वराख्यैः स्फुटभास्करस्ये" त्यादिना प्रायः सम एव । अगस्त्योदयसाधने तत्प्रकारश्च

यदा खरांशुर्भवनद्वयेन स्वाक्षांशहीनेन समस्तदानीम् ।
प्रयात्यगस्त्योऽस्तमयं भषट्कात्तेन च्युतेनोदयमेति तुल्यः ॥

अयं प्रकारश्च ब्रह्मगुप्तलिखितप्रकारसमः ।

## शतानन्दः । १०२१

अस्य माता सरस्वती पिता च शङ्करनामाऽऽसीत् ।

अयं च पुरुषोत्तमपुरीनिवासी शशियुग्मखैकमिते १०२१ शके भास्वती-नामकं करणग्रन्थं वराहमिहिरस्वीकृतसूर्यसिद्धान्तसंमतं व्यलिखत् । अहं ( शतेन-आनन्दः = शतानन्दः ) शतानन्द इति बुद्ध्या संचारेणास्मिन् ग्रन्थे प्रायो गुणहाराः शतसंख्याका एव साधिताः शतानन्देन ।

भारतवर्षे चिरादयं ग्रन्थः प्रसिद्धः । हिन्दीभाषाकविः "मलिकमहम्म-दनामकः" पद्मावतीवर्णनेऽस्य चर्चां चकार । यथा

"भावसती औ व्याकरन पिङ्गल पाठ पुरान ।
वेद भेद सों बात कहि जनु लागे हिय बान" ॥

इदं पद्मावतीनामकं हिन्दीभाषापुस्तकं सप्तविंशत्यधिकनवशततमे ९२७ फसलीनामकशके निर्मितमस्ति ।

भास्वत्या उदाहरणरूपा अनेकाष्टीकाः संस्कृते वर्त्तन्ते । भास्वतीरीत्या सूर्यचन्द्रग्रहणं सम्यक् घटत इति चिराज्जनश्रुतिः । "ग्रहणे भास्वती धन्ये" ति श्लोकः परम्परातो भास्वतीप्रशंसायां प्रसिद्धः । भास्वत्याः प्राचीनहिन्दी-भाषायामेका टीका वनमालिपण्डितेन सार्द्धत्रयोदशशततमे १३५० शके विरचिता । काशिकसंस्कृतराजकीयप्रधानपाठशालासरस्वतीभवने चैका खण्डिता प्रतिरस्ति ह्यस्याः ।

तट्टीकारम्भे

" मुरारि यो ( जो ) हैं वासुदेउ तेहि के ये ( जे ) हहिं चरण कमल तेन्ह नमस्कार कै शिष्य निमित्त भास्वती संक्र ( स्कृ ) त शतानन्द कीन्हि । कौन काल शकु ऊन करव एक सहस्र एकैस १०२१ ग्रन्थादि वर्ष भुक्त जानवे । शाब्र ( स्वा ) ब्द संज्ञा होइ । सो देखि कै बनमाली शिष्यार्थं भाषा टीका कीन्ह । संवत् १४८५ समय ॥

हिन्दीगद्यं न प्राप्यते प्रायः ।
अस्मात्प्राचीनं हिन्दीगद्यं न प्राप्यते प्रायः ।
भास्वत्या लिखितं मुद्रितं च सटीकं पुस्तकं सुलभेन प्राप्यते ।
शतानन्देन कश्चिदन्यो ग्रन्थो विरचितो वा नेति न ज्ञायते ।
भास्वतीं विहाय नान्याऽस्य कृतरुपलभ्यते । भास्वती च सम्प्रति
स्थूलतया क्वचिदेव पठ्यते पाठ्यते च लोकैरिति ।
अस्या एका प्रतिः सप्तरसरसेन्दुप्रमिते १६६७ संवत्सरे लिखिता काशि-
कराजकीयपुस्तकालये वर्त्तते तदारम्भे

नत्वा मुरारेश्चरणारविन्दं श्रीमान् शतानन्द इति प्रसिद्धः ।
तां भास्वतीं शिष्यहितार्थमाह शाके विहीने शशिपक्षखैकैः ॥
शाको नवाद्रीन्दुकृशानु ३१७९ युक्तः कलेर्भवत्यब्दगणस्तु वृत्तः ।
वियन्नभोलोचनवेद ४२०० हीनः शास्त्राब्दपिण्डः कथितः स एव ॥
अथ प्रवक्ष्ये मिहरोपदेशात् श्रीसूर्यसिद्धान्तसमं समासात् । इत्यादि ।

तदन्ते च

खखाश्विवेदैश्च गते युगाब्दे दिव्योक्तितः श्रीपुरुषोत्तमस्थः ।
श्रीमान् शतानन्द इति प्रसिद्धः सरस्वतीशङ्करयोस्तनूजः ॥

इति श्रीपञ्चसिद्धान्तसमे भास्वतीकरणे परिलेखाधिकारोऽष्टमः ।

भास्वत्यां ध्रुवाधिकारः, बीजाधिकारः, तिथ्यधिकारः, ग्रहसाधनाधि-
कारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकारः, परिले-
खाधिकारः । इत्यष्टाधिकाराः सन्ति ।

शतानन्दमते ४५० शकेऽयनांशाभावः । अत्र यद्यपि पञ्चसिद्धान्तसम-
मिति लिखितमस्ति तथापि प्रायः सर्वत्र बहवो भेदा वर्त्तन्ते ।

## भास्करः । १०३६

सह्यकुलाचलाश्रितपुरे विज्जडविडनाम्नि सम्प्रति बीजापुरनामतः प्रसिद्धे शाण्डिल्यगोत्रोद्भूतान्महेश्वरोपाध्यायाद्रसरामदशमिते १०३६ शके भारत-वर्षभूषणरूपः साक्षाद्भास्करावतार एवोदभवत् । "यस्मात् क्षुब्धप्रकृति-पुरुषाभ्या" मित्यादि श्लोकस्य गोलाध्यायभुवनकोशारम्भरूपस्य व्याख्यायां मिताक्षरायां "त एते वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धा इति मूर्त्तिभेदा वैष्णवागमे विशेषतः प्रसिद्धाः" इत्यादिलेखतोऽयं कार्णाटक-ब्राह्मणो वैष्णवः प्रतिभाति सर्वत्र विष्णुपुराणीयवचनोपादानाच्च । अस्य



लीलावती, बीजम्, गोलाध्यायः, गणिताध्यायः, ब्रह्मतुल्यं करणकुतूहलमिति कृतयः सर्वत्र प्रसिद्धाः सन्ति । गोलाध्यायस्य यन्त्राध्याये नाडीवलययन्त्रनिरूपणे "स चाङ्कनप्रकारः सर्वतोभद्रयन्त्रे यथा मया पठितः" इत्याचार्यवाक्येनास्य सर्वतोभद्रयन्त्रनामिकापि कृतिः परन्तु साद्यावधि दृष्टिगोचरीभूता न ।

"आसीन्महेश्वर इति प्रथितः पृथिव्यामाचार्यवर्यपदवीं विदुषां प्रपन्नः ।
लब्ध्वावबोधकलिकां तत एव चक्रे तज्जेन बीजगणितं लघु भास्करेण" ॥

इति बीजगणितान्तिमलेखेनास्य गुरुरस्य जनको महेश्वर एवेति स्फुटम् । प्राचीनसिद्धान्तशिरोमणिपुस्तकेषु चाध्यायसमाप्तौ "महेश्वरोपाध्यायसुतभास्कराचार्यविरचिते" इति लेखो दृश्यते ।

वासनावार्त्तिककृतो नृसिंहस्य गणिताध्यायप्रथमश्लोकव्याख्यायाः

"अथ शाण्डिल्यमुनिवरगोत्रावतंसः कुम्भोद्भवालङ्कृतदिगङ्गनाभरणसर्वस्वं सह्यकुलाचलाश्रितविज्जडविडनगरनिवासी पवित्रितदण्डकारण्यो नानामखार्जितपुण्यो याज्ञिकानामग्रणीर्यजुःशाखिनामुपाध्यायः सांवत्सराणामाचार्यः काव्यनाटकालङ्कारविदामध्यापयिता धीवृद्धिदोपायकर्त्ता ब्रह्मतुल्यवसिष्ठतुल्यसर्वतोभद्रादियन्त्रनिर्माता महाराष्ट्राणामाश्रयो महेश्वराचार्यनन्दनः परमकारुणिकः श्रीभास्कराचार्यः श्रीधरब्रह्मगुप्तलल्लचतुर्वेदाचार्यनिर्मितापारगणितार्णवविचारवारिरिङ्गत्सन्देहसन्दोहग्राहगृहीतानुद्दिधीर्षुः सिद्धान्तशिरोमणिं प्रणिनाये"त्यस्या वसिष्ठतुल्यस्य पूर्वादृष्टस्यापि कर्त्ता भास्करः सिध्यति ।

लीलावत्यां क्षेत्रव्यवहारे चतुर्भुजक्षेत्रानियतस्थितिवर्णनम्, वृत्तपृष्ठघनफलसाधनं श्रेढीगणिते गुणोत्तरश्रेढ्यां सर्वफलानयनम्, एकद्वित्र्यादिमूषावहनादिभेदाः, अङ्कपाशप्रकरणम्, इत्यादयः । बीजे करणीवर्गादौ नियमः, कुट्टकेऽनेकविशेषप्रतिपादनम्, वर्गप्रकृतौ योगान्तरभावनाभ्यां कनिष्ठज्येष्ठानयनम्, एकवर्णसमीकरणे पञ्चकशतदत्तधनादित्याद्याद्योदाहरणेषु कल्पनालाघवेनाव्यक्तमानानयनम्, अनेकवर्णसमीकरणे "त्रिभिः पारावताः पञ्चे" त्याद्याद्योदाहरणेषु कल्पनालाघवेन कपोतादीनां मानानयनम्, "कौ राशी वद पञ्चषट्कविहताविः" त्याद्युदाहरणे क्रियासङ्कोचाय कल्पनाप्रदर्शनम्, वर्गसमीकरणे द्विविधमानप्रदर्शनम्, पद्मनाभबीजसूत्रे

"यत्स्यात्साल्पवधाद्दुर्धतो
व्यभिचारप्रदर्शनम्, अनेकवर्णमध्यमाहरणे
घनपदमि" त्याद्याद्योदाहरणे राशिकल्पनेऽपूर्वयुक्तिप्रदर्शनम्, भाविते
चाभिन्नराशिमानार्थं "भावितं पक्षतोऽभीष्टा" दित्यादिसूत्रेणापूर्वक्रियाप्र-
तिपादनम्, गणिताध्याये भगणोपपत्तिकथनम्, चतुर्युगसहस्रेण ब्रह्मणो
दिनं कथं भवतीत्यत्र युक्तिकथनम्, मध्यमाधिकारेऽपूर्वोदया१न्तरकर्म्मकथनम्,
स्पष्टाधिकारे लघुज्याप्रकारेण ज्यानयने स्फुटभोग्यखण्डसाधनम्, तात्कालि-
कभोग्यखण्डसाधनम्, तात्कालिकगतिसाधनम्, त्रिप्रश्नाधिकारेऽसकृद्विधिना
कोणशङ्कोरानयनम्, अक्षक्षेत्राणां सम्यगुत्पादनम्, दिगंशेभ्य एकेनैवा-
ऽऽनयनेन सर्वदिक्छायानयनम्, बहुत्रोदाहरणेषु विशिष्टकल्पनया तदुत्तरी-
करणम्, चन्द्रग्रहणे सकृद्विधिना रविचन्द्रकलाकर्णसाधनम्, कलात्मकं
भूभानयनम्, सूर्यग्रहणे सकृत्प्रकारेण लम्बनानयनम्, इष्टकालाद्ग्रासा-
नयनं ग्रासादिष्टानयनं च, ग्रहच्छायाधिकारे स्पष्टशरेण स्पष्टक्रान्तिसाध-
नम्, क्रमज्यया ऽऽयनाक्षजदृक्कर्म्मसाधनम्, शृङ्गोन्नत्यधिकारे शुक्लसाध-
नार्थं चन्द्रे संस्का*रविशेषसाधनम्, भग्रहयुत्यधिकारे नित्योदितभस्वरूप-
प्रकथनम्, पाताधिकारे चन्द्रगोलायनसन्धिसाधनम्, क्रान्तिसाम्यस्य
सम्यग्गतागतभावाभावप्रतिपादनम्, गोलाध्याये भूपृष्ठफलसाधनोपपत्तिकथनं
तत्र लल्लमतखण्डनम्, जिनाल्पलम्बदेशेषु विशेषकथनम्, उत्क्रमज्यया
वलनानयनं न समीचीनमिति प्रतिपादनम्, यन्त्राणां वर्णनम्, महाप्रश्नानां
प्रतिपादनमित्यादयो विशेषा अलौकिकं पाण्डित्यं प्रथयन्ति जगद्भास्करस्य
श्रीभास्करस्य यत्र बहवः सम्प्रति प्रसिद्धरेखागणितत्रिकोणमितिचापीयत्रि-
कोणमितिचलनकलनादिप्रकारप्रकाशकाश्च राजन्ति ।

ते विशेषाश्चलनकलनादिप्रभूतास्तथापि भास्करश्चलनकलनादिज्ञ इति
न सिध्यति तत्र तदुक्तोपपत्तीनामसमीचीनत्वात् ।

अहो गोलाध्याये भुवनकोशे "गोलस्य परिधिः कल्प्यो वेदघ्नज्या-
मितेर्मित" इत्यादिव्याख्यायां "यत्पुनः क्षेत्रफलमूलेनक्षेत्रफलं गुणितं

१. स्वनिर्मितसिद्धान्तशेखरे श्रीपतिना भास्करात्पूर्वमुदयान्तरकर्म्मोक्तम् । सं० ।

* अयं संस्कारस्तथैवान्तरांशवशेनास्ति यथा सामोस (Samos) स्थानीयेन अरिस्टारकस् (Aristarchus) नाम्ना रविचन्द्रकर्णयोः सम्बन्धज्ञानार्थे चन्द्रबिम्बार्द्धसिते रविचन्द्रान्तरांशा उपलब्धाः । तेन तेऽन्तरांशाः ८७° अंशा निश्चिता भास्करेण च ८५° । ४५′ एतेंऽशाः । द्वयोर्युक्तिरैकैव केवलं मानयोर्भेदः । अरिस्टारकस्संज्ञकस्य जन्म ख्रीष्टतः पूर्वं ३१० वर्षेषु निधनं च २५० वर्षेष्वासीत् ।



घनफलं स्यादिति तत्प्रायश्चतुर्वे*दाचार्यः परमतमुपन्यस्तवानि" त्याचार्योक्तेन भास्कर आर्यभटीयतन्त्रं न दृष्टवानिति सिध्यति तन्महद्वैचित्र्यम् । यतोऽयं प्रकार आर्यभटस्य ।

यथा सम्प्रति भास्करीयसिद्धान्तशिरोमणिमेवाऽऽदरात्पठन्ति लोकास्तथैव भास्करसमये लल्लसिद्धान्तस्य शिष्यधीवृद्धिदस्य विदुषां मध्ये समादरेण प्रचार आसीत् । भास्करश्च स्वयं लल्लसिद्धान्तमधीत्य जातबोधो लल्लमतमेव बहुत्राखण्डयदित्यनुमीयते तत्खण्डनार्थमेव ब्रह्मगुप्तस्वीकृतागमं च स्वीचकार ।

सर्वेषां प्रकाराणां समीचीनाऽसमीचीना वैकरूपा वासना सर्वत्र भास्करेण लिखिता परन्तु गोलाध्यायान्ते ज्योत्पत्तिप्रकाराणां व्याख्यामेव कुर्वता कस्माच्चिद्यवनात्परदेशागताद्दुपपत्तिमन्तरा रीतिमात्रमेवाभ्यस्तमित्यनुमीयते गोलाध्यायस्य महाप्रश्नाध्यायसमाप्तौ

"प्रश्नानमून् प्रपठतो गणकस्य गोलकन्दोल्लसत्सरलयुक्तिशतप्रवालैः ।
प्रश्नोत्तरार्थपरिचिन्तनवारिसिक्तमूलामला मतिलता समुपैति वृद्धिम्" ॥

इत्यत्र गोलाध्यायादिश्लोकव्याख्यायां 'मङ्गलादीनि मङ्गलान्तानि च शास्त्राण्यलङ्कारकृतां मतान्यतः सिद्धिवृद्धिशब्दावाद्यन्तयोर्निक्षिप्ताविति स्वीयप्रतिज्ञया वृद्धिपदेन ग्रन्थसमाप्तिं कुर्वतो भास्करस्य पुनस्तदग्रे वासनारहितज्योत्पत्तिकथनानौचित्यात् ।

लीलावत्यां गङ्गाधरस्य, गणेशदैवज्ञस्य, सूर्यदासस्य, लक्ष्मीदासस्य, मुनीश्वरस्य, रामकृष्णस्य, कृपानाथस्य च टीका वर्त्तते । सम्प्रति मत्कृतोपपत्तिरूपा मुद्रिता टिप्पणी तथा श्रीबापूदेवशास्त्रिकृता टिप्पणी च मुद्रिता वर्त्तते ।

बीजगणिते कृष्णदैवज्ञस्य, सूर्यदासस्य च टीका प्रसिद्धोपलभ्यते । मत्कृतोपपत्तिरूपा टिप्पणी च मुद्रिता वर्त्तते ।

सिद्धान्तशिरोमणौ नृसिंहदैवज्ञस्य, मुनीश्वरस्य, लक्ष्मीदासस्य, गणेशदैवज्ञस्य, सूर्यदासस्य च टीका वर्त्तते ।

* अयमेव चतुर्वेदोपाख्यः पृथूदक आदरत्वाच्चतुर्वेदाचार्य इति कथ्यते लोकैः । चरमे बयसि संसारमसारं विज्ञाय कुटुम्बं विहाय कर्मन्यासमकरोत्तेनैव स्वामित्वं गतः । अत एव सम्प्रति पृथूदकस्वामीति प्रसिद्धः । एतत्कृता ब्रह्मगुप्तसिद्धान्तोपरि टीका प्राचीनैरादृता सम्प्रति दुरापा महताऽऽयासेन दक्षिणप्रान्ते राजकर्म्मचारिभिरुपलब्धा सा मयाऽद्यावधि न दृष्टा कदाचित्तत्रास्य समयादिकं स्पष्टं भवेत् ।

करणकुतूहलस्य विश्वनाथादिकृतोदाहरणरूपा टीकोपलभ्यते न सम्य- गुपपत्तिरूपाऽतोऽस्माभिरुपपत्तिरूपा टीका नवीना स्वकृता मुद्रिता । अन्ये- षामनेकदेशस्थानामाचार्याणां बहूनां भास्करग्रन्थोपरि टीकाः सन्ति प्रसि- द्धानां नामानि मया तु पूर्वं लिखितानि ।

पारसीकभाषायां*नृपतीन्द्राऽकबरशाहाऽऽज्ञया फैज़ीनाम्ना सप्तवसुबा- णेन्दुसमे १५८७ खीष्टशके लीलावत्यनुवादः कृतः । आत-उल्लाह-रसीदीना- म्ना च शाहजहांनृपतिराज्यसमये वेदाग्निरसेन्दु १६३४ खीष्टशके बीजग- णितानुवादश्च तद्भाषायां कृतः । हेनरी ठामस् कोलब्रूक (Henry Thomas Colebrooke) महाशयेन च सप्तेन्दुवसुभूमिते १८१७ खीष्ट- शके लीलावतीबीजयोरङ्गलभाषायामनुवादः कृतः । जे टेलर (J. Tayler) साहिबेनापि रसेन्दुधृति १८१६ मिते खीष्टशके लीलावत्यनुवादः कृतस्तथा ई. स्ट्रेची (E. Strachy) साहिबेनापि बीजगणितानुवादः कृतो विश्व- धृति १८१३ मिते खीष्टशके । भास्करेण सिद्धान्तशिरोमणिर्युग्मसप्तदश- मिते १०७२ शके करणकुतूहलं च पञ्चशून्यैकादशसमे ११०५ शके व्यरचि ।

ग्रन्थग्रथनकालश्च गोलाध्यायस्य प्रश्नाध्याये

"रसगुणपूर्णमही१०३६ समशकनृपसमयेऽभवन्ममोत्पत्तिः ।
रसगुण ३६ वर्षेण मया सिद्धान्तशिरोमणी रचितः" ॥

इत्यनेन स्फुटीकृतो ग्रन्थकृता । तत्रैव स्वस्थानादिवर्णनं च । यथा

"आसीत्सह्यकुलाचलाश्रितपुरे त्रैविद्यविद्वज्जने
नानासज्जनधाम्नि विज्जडविडे शाण्डिल्यगोत्रो द्विजः ।
श्रौतस्मार्त्तविचारसारचतुरो निःशेषविद्यानिधिः
साधूनामवधिर्महेश्वरकृती दैवज्ञचूडामणिः ॥

तज्जस्तच्चरणारविन्दयुगलप्राप्तप्रसादः सुधी-
र्मुग्धोद्बोधकरं विदग्धगणकप्रीतिप्रदं प्रस्फुटम् ।
एतद्व्यक्तसदुक्तियुक्तिबहुलं हेलावगम्यं विदां
सिद्धान्तग्रथनं कुबुद्धिमथनं चक्रे कविर्भास्करः ॥

* बेण्टलीसाहिबेन इत्यादितिहासतत्त्वमशालैव भास्करसमयश्चाकबरराज्यानन्तरं कथितः ।



अत्र केचन प्रथमश्लोके "विज्जडविडे" इत्यत्र वित्-जडविडे इति पदच्छेदं कृत्वा वित्पदं महेश्वरकृतिनो विशेषणमिति व्याख्याय जडविड इति भास्करग्रामनाम वदन्ति ।

भास्करेण स्वतनूजाया लीलावत्या जन्मकुण्डल्यां बालविधवायोगमव- लोक्य विवाहो न कृतो जगति तन्नाम प्रसिद्धार्थं तन्नाम्ना पाटीगणितमर- चीत्येके वदन्ति । अन्ये च सन्तानं विना दुःखितायाः स्वभार्याया लीलाव- त्याश्चिरं जगति प्रसिद्ध्यर्थं तन्नाम्ना पाटीगणितं कृतं भास्करेणेति निगदन्ति ।

परन्तु डाक्टरभाऊदाजीनाम्ना नासिकक्षेत्रनिकटे चाप्तादितात् ताम्र- पत्राद्भास्करपुत्रपौत्राश्चाऽऽसन्निति स्फुटम् । इदं ताम्रपत्रं सत्यं वाऽसत्यमि- त्यत्रास्माकं संशयस्तथापीतिहासरसिकानां विनोदाय तत्रत्यो लेखश्च प्रदर्श्यते ।

१ नमो गणाधिपतये सिद्धि——सुधाकरभूमि———— ———— स्थ-दृ-त्वसंरक्षणानि गगनेचरवास्तोतः ।

उद्भटबुद्धिर्भाट्टे सांख्ये संख्यः स्वतन्त्रधीस्तन्त्रे ।
वेदेऽनवद्यविद्योऽनल्पः शिल्पादिषु कलासु ॥ १ ॥

स्वच्छन्दोऽथच्छन्दसि शास्त्रे वैशेषिके विशेषज्ञः ।
यः श्रीप्रभाकरसमः प्राभाकरदर्शने कविः काव्ये ॥ २ ॥

बहुगुणगणितप्रभृतिस्कन्धत्रितये त्रिनेत्रसमः ।
विबुधाभिवन्दितपदो जयति श्रीभास्कराचार्य्यः ॥ ३ ॥

श्रीमद्यदुवंशाय स्वस्त्यस्तु समस्तवस्तुसहिताय ।
विश्वं यत्र त्रातुं जातो विष्णुः स्वतन्त्रस्तु ॥ ४ ॥

गर्जद्गुर्जरकुञ्जरोत्कटघटासंघट्टकण्ठीरवो
लाटोरस्ककपाटपाटनपटुः कर्णाटहृत्कण्टकः ।
श्रीमान् भिल्लमभूपतिः समभवद्भूपालचूडामणि-
स्तस्ताश्चार्ध्रपुरंध्रिकान्तसुलहच्छ्रीजैत्रपालोऽभवत् ॥ ५ ॥

लक्ष्मीकान्तलवः प्रतारितभवः श्रीजैत्रपालोद्भवः
सङ्ग्रामाङ्गणसञ्चिताति विभवः शास्ता भुवः सिंघणः ।
पृथ्वीशो मथुराधिपो रणमुखे काशीपतिः पातितो
येनासावपि यस्य भृत्यवटुना हम्मीरवीरो जितः ॥ ६ ॥

करणकुतूहलस्य विश्वनाथादिकृतोदाहरणरूपा टीकोपलभ्यते न सम्यगुपपत्तिरूपाऽतोऽस्माभिरुपपत्तिरूपा टीका नवीना स्वकृता मुद्रिता। अन्येषामनेकदेशस्थानामाचार्याणां बहूनां भास्करग्रन्थोपरि टीकाः सन्ति प्रसिद्धानां नामानि मया तु पूर्वं लिखितानि।

पारसीकभाषायां*नृपतीन्द्राऽकबरशाहाऽऽज्ञया फैज़ीनाम्ना सप्तवसुबाणेन्दुसमे १५८७ ख्रीष्टशके लीलावत्यनुवादः कृतः। आत-उल्लाह-रसीदीनाम्ना च शाहजहांनृपतिराज्यसमये वेदाग्निरसेन्दु १६३४ ख्रीष्टशके बीजगणितानुवादश्च तद्भाषायां कृतः। हेनरी ठामस् कोलब्रूक (Henry Thomas Colebrooke) महाशयेन च सप्तेन्दुवसुभूमिते १८१७ ख्रीष्टशके लीलावतीबीजयोरङ्ग्लभाषायामनुवादः कृतः। जे टेलर (J. Tayler) साहिबेनापि रसेन्दुधृति १८१६ मिते ख्रीष्टशके लीलावत्यनुवादः कृतस्तथा ई. स्ट्रेची (E. Strachy) साहिबेनापि बीजगणितानुवादः कृतो विश्वधृति १८१३ मिते ख्रीष्टशके। भास्करेण सिद्धान्तशिरोमणिर्युगमसप्तदशमिते १०७२ शके करणकुतूहलं च पञ्चशून्यैकादशसमे ११०५ शके व्यरचि।

ग्रन्थग्रथनकालश्च गोलाध्यायस्य प्रश्नाध्याये

"रसगुणपूर्णमही१०३६ समशकनृपसमयेऽभवन्ममोत्पत्तिः।
रसगुण ३६ वर्षेण मया सिद्धान्तशिरोमणी रचितः"॥

इत्यनेन स्फुटीकृतो ग्रन्थकृता। तत्रैव स्वस्थानादिवर्णनं च। यथा

"आसीत्सह्यकुलाचलाश्रितपुरे त्रैविद्यविद्वज्जने
नानासज्जनधाम्नि विज्जडविडे शाण्डिल्यगोत्रो द्विजः।
श्रौतस्मार्त्तविचारसारचतुरो निःशेषविद्यानिधिः
साधूनामवधिर्महेश्वरकृती दैवज्ञचूडामणिः॥

तज्जस्तच्चरणारविन्दयुगलप्राप्तप्रसादः सुधी-
र्मुग्धोद्बोधकरं विदग्धगणकप्रीतिप्रदं प्रस्फुटम्।
एतद्व्यक्तसदुक्तियुक्तिबहुलं हेलावगम्यं विदां
सिद्धान्तग्रथनं कुबुद्धिमथनं चक्रे कविर्भास्करः॥

* वेण्टलीसाहिबेन हठादितिहासतत्त्वमज्ञात्वैव भास्करसमयश्चाकबरराज्यानन्तरं कल्पितः।



अत्र केचन प्रथमश्लोके "विज्जडविडे" इत्यत्र वित्-जडविडे इति पदच्छेदं कृत्वा वित्पदं महेश्वरकृतिनो विशेषणमिति व्याख्याय जडविड इति भास्करग्रामनाम वदन्ति।

भास्करेण स्वतनूजाया लीलावत्या जन्मकुण्डल्यां बालविधवायोगमवलोक्य विवाहो न कृतो जगति तन्नाम प्रसिद्धार्थं तन्नाम्ना पाटीगणितमरचीत्येके वदन्ति। अन्ये च सन्तानं विना दुःखितायाः स्वभार्याया लीलावत्याश्चिरं जगति प्रसिद्ध्यर्थं तन्नाम्ना पाटीगणितं कृतं भास्करेणेति निगदन्ति।

परन्तु डाक्टरभाऊदाजीनाम्ना नासिकक्षेत्रनिकटे चाप्तादितात् ताम्रपत्राद्भास्करपुत्रपौत्राश्चाऽऽसन्निति स्फुटम्। इदं ताम्रपत्रं सत्यं वाऽसत्यमित्यत्रास्माकं संशयस्तथापीतिहासरसिकानां विनोदाय तत्रत्यो लेखश्च प्रदर्श्यते।

१ नमो गणाधिपतये सिद्धि——सुधाकरभूमि———————
स्थ-दृ-त्वसंरक्षणानि गगनेचरवास्तोतः।

उद्भटबुद्धिर्भाट्टे सांख्ये संख्यः स्वतन्त्रधीस्तन्त्रे।
वेदेऽनवद्यविद्योऽनल्पः शिल्पादिषु कलासु॥ १॥

स्वच्छन्दोऽथच्छन्दसि शास्त्रे वैशेषिके विशेषज्ञः।
यः श्रीप्रभाकरसमः प्राभाकरदर्शने कविः काव्ये॥ २॥

बहुगुणगणितप्रभृतिस्कन्धत्रितये त्रिनेत्रसमः।
विबुधाभिवन्दितपदो जयति श्रीभास्कराचार्य्यः॥ ३॥

श्रीमद्यदुवंशाय स्वस्त्यस्तु समस्तवस्तुसहिताय।
विश्वं यत्र त्रातुं जातो विष्णुः स्वतन्त्रस्तु॥ ४॥

गर्जद्गुर्जरकुञ्जरोत्कटघटासंघट्टकण्ठीरवो
लाटोरस्ककपाटपाटनपटुः कर्णाटहृत्कण्टकः।
श्रीमान् भिल्लमभूपतिः समभवद्भूपालचूडामणि-
स्तस्तार्त्तांध्रपुरंध्रिकान्तसुखहृच्छ्रीजैत्रपालोऽभवत्॥ ५॥

लक्ष्मीकान्तलवः प्रतारितभवः श्रीजैत्रपालोद्भवः
सङ्ग्रामाङ्गणसञ्चितातिविभवः शास्ता भुवः सिंघणः।
पृथ्वीशो मथुराधिपो रणमुखे काशीपतिः पातितो
येनासावपि यस्य भृत्यवटुना हम्मीरवीरो जितः॥ ६॥

अवततार पुरा पुरुषोत्तमो यदुकूले जगतीहितहेतवे ।
जयति सोऽयमिमां सकलामिलामवति माम(पि)सिद्धमहीपतिः ॥७॥

अथ भृत्यान्वयवर्णनम् ।

श्रीमद्भास्करवंशाय भव्यं भूयात् स भूपतिः ।
निकुम्भे यत्र संभूतो रामो यस्यान्वयेऽभवत् ॥ ८ ॥

तत्रासीन्नृपतिर्जितक्षितिपतिर्ध्यातैकलक्ष्मीपति-
र्दैवब्राह्मणवन्दने ततमतिः श्रीकृष्णराजाह्वयः ।
शौर्यौदार्यविवेकविक्रमगुणैस्तुल्यो न येनापरः
प्रीत्या पाण्डवपुङ्गवार्जितपदं तद्धर्मराजेति यत ॥ ६ ॥

प्राप्ताङ्गप्रभवस्ततस्ततमतिः प्राप्तप्रतापोन्नति-
र्वीरो वैरिवधूविधूनितशिरा यः श्रीन्द्रराजाह्वयः ।
तस्यासीत्तनयः सतां सविनयः सामन्तसीमन्तिनी-
वैधव्यव्रतसद्गुरुर्गुरुगुणः सत्पुण्यपण्यापणः ॥ १० ॥

चतुरस्तुरगारूढो रेवन्त इव गोवनः ।
सौन्दर्यदर्पः कन्दर्पो यं दृष्ट्वाऽनङ्गतां गतः ॥ ११ ॥

श्रीगोवनाब्द्रत्नसिंधोरुद्भूतमूर्त्तिस्ततपुण्यकीर्त्तिः ।
जितारिचक्रः क्षितिपालशक्रः श्रीसोह्लदेवः स्तुतवासुदेवः ॥१२॥

शरणागतवज्रपञ्जरः परनारीषु सदा सहोदरः ।
व्रतसत्यपथे युधिष्ठिरः सततं वैरिवधूभयज्वरः ॥ १३ ॥

स षोडशशतग्रामदेशं दुर्गपुरान्वितम् ।
सोह्लदेवे दिवं याते शास्ति तस्यानुसम्भवः ॥ १४ ॥

त्यागे सूर्यसुतोपमोऽर्जुनसमः शौर्ये निकुम्भान्वये
विख्यातः क्षितिपालभालतिलकः श्रीगोवनस्यात्मजः ।
श्रीमत्सिंघणदेववैरिकरटीकण्ठीरवो यत्करो
नन्द्यान्नन्दसुनन्दने ततमतिर्हेमाद्रिदेवश्चिरम् ॥ १५ ॥

शाण्डिल्यवंशे कविचक्रवर्त्ती त्रिविक्रमोऽभूत्तनयोऽस्य जातः ।
यो भोजराजेन कृताभिधानो विद्यापतिर्भास्कर†भट्टनामा ॥ १६ ॥

* श्रीगोवनात्सज्जनरत्नसिन्धोरिति पाठे न छन्दोभङ्गः ।

† भट्टभास्करस्य फलिते बहूनि वचनान्युपलभ्यन्ते यथा मुहूर्त्तचिन्तामणिशुभा-



तस्माद्गोविन्दसर्वज्ञो जातो गोविन्दसन्निभः ।
प्रभाकरः सुतस्तस्मात् प्रभाकर इवापरः ॥ १७ ॥
तस्मान्मनोरथो जातः सतां पूर्णमनोरथः ।
श्रीमान् महेश्वराचार्यस्ततोऽजनि कवीश्वरः ॥ १८ ॥
तत्सूनुः कविवृन्दवन्दितपदः सद्वेदविद्यालता-
कन्दः कंसरिपुप्रसादितपदः सर्वज्ञ ( विप्रासदः ) ।
यच्छिष्यैः सह कोऽपि नो विवदितुं दक्षो विवादी क्वचित् ।
श्रीमान् भास्करकोविदः समभवत् सत्कीर्त्तिपुण्यान्वितः ॥ १६ ॥
लक्ष्मीधराख्योऽखिलसूरिमुख्यो वेदार्थवित्तार्किकचक्रवर्त्ती ।
क्रतुक्रियाकाण्डविचारसारो विशारदो भास्करनन्दनोऽभूत् ॥२०॥
सर्वशास्त्रार्थदक्षोऽयमिति मत्वा पुरादतः ।
जैत्रपालेन यो नीतः कृतश्च विबुधाग्रणीः ॥ २१ ॥
तस्मात् सुतः सिंघणचक्रवर्त्तिदैवज्ञवर्योऽजनि चङ्गदेवः ।
श्रीभास्कराचार्यनिबद्धशास्त्रविस्तारहेतोः कुरुते मठं यः ॥२२॥
भास्कररचितग्रन्थाः सिद्धान्तशिरोमणिप्रमुखाः ।
तद्वंश्यकृताश्चान्ये व्याख्येया मन्मठे नियतम् ॥ २३ ॥
श्रीसोह्लदेवेन मठाय दत्तं हेमादि ( ना किञ्चिदिहापरैश्च ) ।
भूम्यादि सर्वं परिपालनीयं भविष्यभूपैर्बहुपुण्यवृद्ध्यै ॥ २४ ॥

स्वस्ति श्रीशके ११२८ प्रभवसंवत्सरे श्रीश्रावणे मासे पौर्णमास्यां चन्द्रग्रहणसमये श्रीसोह्लदेवेन सर्वजनसन्निधौ हस्तोदकपूर्वकं निजगुरुरचित-मठायाग्रस्थानं दत्तम् । तद्यथा

इयां पाटणीं जे कणे उघटे तेहाचा जो सिंदू जी राउला होता श्रोहका प्रासीं तो मढा दिह्लला ब्राह्मणा जें दिक हे ब्रह्मोत्तर तं ब्राह्मणीदिह्लले । ग्राहकापासि दामाचा वीसोवा असुपाठी गिधवग्राहकापासि । पञ्चपोफली-ग्राहकापासि पहिवहिले आयणे आदाणा चीलो मठा दिह्लला जेति घाणे वाहति तेतियां प्रतिपलि पलीतेला । जेमविजेने मढीचे नमाव-नवावे मापा उगठा अर्द्ध अर्द्ध मापाचे हारिभूपाचे स्तूक तथा भूमिः चतुराघाट विशुद्धः

शुभप्रकरणस्य सप्तमश्लोकटीकायां पीयूषधारायां गोविन्दकृतायां "उक्तं च भट्टभास्करेण त्रयोदश्यां द्वितीयायां दशम्यां च विशेषतः । शूद्रविट्क्षत्रियाः स्नानं नाऽऽचरेयुः कथंचनेति" ॥ परन्त्वयं स एव भट्टभास्करो वाऽन्य इति तद्ग्रन्थमन्तरा न ज्ञायते ॥

पंडिता-कालतु-मीचडरा धामो-
३०६ ग्राम-बाले-कामतामध्यत्रथा-कल
जीची सोढीश्रा ।

अत्र त्रयोविंशतिश्लोकेन यस्य मठमासीत्तदन्यवंशीयो भास्करः सिध्यति "तद्वंश्यकृताश्चान्ये" इति लेखात् ।

सर्वतोभद्रयन्त्रवसिष्ठतुल्ये विहायान्याः सर्वाः कृतयो लिखिता मुद्रिता-श्चोपलभ्यन्तेऽस्य गणकचक्रचूडामणेर्भास्करस्य । लल्लसिद्धान्तगणिताध्याये भास्करकृता टीका खण्डिता काशिकराजकीयपुस्तकालये मत्क्रीता नवीनात्यशुद्धा च वर्त्तते साऽस्यैव भास्करस्य कृतिर्यद्वाऽन्यस्येति सम्पूर्णग्रन्थप्राप्तिमन्तरा न ज्ञायते । पूर्वप्रदर्शिते नृसिंहलेखे "धीवृद्धिदोपायकर्त्ता" इति वाक्येनास्यैव सा टीकेत्यनुमीयते ।

## बल्लालसेनः । १०८२

अयं मिथिलामण्डलमहीमहेन्द्रस्य श्रीलक्ष्मणसेनाभिधस्य तनयो मिथिलामहाराजाधिराजः स्वयमेव खनवदशमिते १०९० शके निजराज्याभिषेकतोऽष्टवर्षानन्तरं बहुविशेषसहितं संहितारूपं वस्तुतोऽद्भुतरूपमद्भु- * तसागराख्यं ग्रन्थमकरोत् । अयं सम्पूर्णो ग्रन्थोऽस्माभिर्न दृष्टः किन्तु बहुत्रस्खलितोऽसंलग्नोऽशुद्धः प्राचीन एकोऽद्भुतसागरो वर्त्तते काशिकराजकीयपुस्तकालये तदवलोकनेनायं बहुविशेषयुक्त इति सिध्यति ।

अत्रैकस्मिन्नेव स्थले गर्गस्य मतं ततो वृद्धगर्गस्य मतं च विलिखितमित्यनेन गर्गादन्यो वृद्धगर्ग इति स्फुटम् ।

अत्र गर्गवृद्धगर्गपराशरकश्यपादीनां परःशतानि वचनान्युपलभ्यन्ते ।

एव मत्र गर्गस्य, वृद्धगर्गस्य, वराहसंहितायाः, पराशरस्य, विष्णुधर्म्मोत्तरस्य, देवलस्य, वसन्तराजस्य, वटकणिकाया, महाभारतस्य, वाल्मीकिरामायणस्य, कश्यपस्य, यवनेश्वरस्य, मत्स्यपुराणस्य. भार्गवतस्य, मयूरचित्रस्य, ऋषिपुत्रस्य, राजपुत्रस्य, पञ्चसिद्धान्तिकाया, ब्रह्मगुप्तस्य, भट्टबलभद्रस्य, पुलिशाचार्य्यस्य, सूर्यसिद्धान्तस्य, बिष्णुचन्द्रस्य, प्रभाकरस्य वचनान्युपलभ्यानि भवन्ति ।

यथा संहितायां चारादयोऽध्यायाः सन्ति तथाऽस्मिन् सागरे चाऽऽवर्त्ताख्या अध्यायाः सन्ति ।

---

* अयं ग्रन्थः १९०५ ख्रीष्टाब्दे प्राभाकरी—( रामकटोरा, बनारस क्याण्ट ) कम्पनीतः प्राकाश्यं नीतः । सं० ।



अत्र ग्रहाणामद्भुतावर्त्ता विडालश्वशृगालगृहगोधिकापिपीलिकाखञ्जनादिमक्षिकामशकलूतभ्रमरमेकखञ्जरीटपोतकीकृष्णपक्षिकवायसाशनिपरिवेषेन्द्रचापनिर्घातगजाश्वादीनामावर्त्ताश्च वर्त्तन्ते । सर्वेष्वावर्त्तेषु तत्तत्पदार्थजन्यशुभाशुभफलानि प्राचीनाचार्यवचनतो वराहोक्तफलेभ्योऽप्यधिकानि लिखितानि सन्ति । सर्वैः प्राचीनेतिहासरसिकैरयं सम्पूर्णः सागरो यत्नतो विलोकनीयः । अत्रागस्त्यावर्त्ते ब्रह्मगुप्तस्य वचनं

"राशिचतुष्केण यदा स्वाक्षांशयुतेन भवति तुल्योऽर्कः ।
उदयोऽगस्त्यस्य मुनेश्चक्रार्द्धाच्छोधितेऽस्तमयः" इत्युपलभ्यते ॥

एतद्ब्रह्मगुप्तप्रकाररूपमेव ब्रह्मदेवप्रकारान्तरमगस्त्यास्तोदयसाधनेऽस्ति । ( ब्रह्मदेववर्णनं द्रष्टव्यम् ) ।

सप्तर्ष्यद्भुतावर्त्ते "भुजवसुदशमितशाके १०८२ श्रीमद्बल्लालसेनराज्यादौ" इत्यनेन स्वराज्यसमयः प्रदर्शितः । श्लोकोत्तरार्द्धमतिभग्नमस्ति तत्र स्वपितुर्लक्ष्मणसेनस्य वर्षप्रमाणमभिहितमिति ज्ञायते । राह्वद्भुतावर्त्ते

"अथाद्भुतसागरारम्भशकाब्दात्पर्वेश्वरगणनम् ।
खनवदशोनशकाब्दा द्विगुणाः सकृता रवावुदग्गोले ।
सशरा याम्ये ज्ञेयाः पर्वेशाः सप्तभिः शिष्टाः" ॥

इत्यनेन पर्वेशज्ञानं लिखितमनेनैव ग्रन्थारम्भशको नर्णीतोऽस्माभिः ।

एवमस्मिन्नावर्त्ते "अत्र कठश्रुतिः । यत्रापर्वणि राहुदर्शनं तत्र नरपतेर्वधमादिशेत्" इति तथा

"एवं वराहमिहिरश्री*षेणार्यभटविष्णुचन्द्राद्यैः ।
लोकविरुद्धमभिहितं वेदस्मृतिसंहितावाह्यम् ॥
राहुकृतं ग्रहणद्वयमागोपालाङ्गनाप्रसिद्धमिदम्" ।

इत्यादिब्रह्मगुप्तवचनानि तथा

"तमोमयस्य तमसो रविरश्मिपलायिनः ।
भूछाया चन्द्रविम्बश्च स्थाने द्वे परिकल्पिते" ॥

इति च सूर्यसिद्धान्तवचनं च सम्प्रतिप्रसिद्धसूर्यसिद्धान्ताद्भिन्नमुपलभ्यते । अस्मिन्नेवावर्त्ते भट्टबलभद्रोक्तं ग्रहणकारणमभिहितम् । तथा "बुधे-

---

* मन्मते श्रीसेन इति पाठः साधुः ।

मार्गवाच्छादनं विना रविच्छिद्रे परचक्रागमः" इति—अनेन स्वकाले बुधसूर्ययुतिः शुक्रसूर्ययुतिश्च प्रसिद्धाऽऽसीदिति च सूचितम्। ग्रहयुद्धावर्त्ते "सर्वे जयिन उदक्स्था दक्षिणदिक्स्थो जयी शुक्रः"। इति पुलिशाचार्य वचनं प्रतिपादितम्।

बृहस्पत्यावर्त्तेऽपि ग्रन्थारम्भशकाब्दात् षष्ट्यब्दयुगगणनं कृतम्। रव्यावर्त्तेऽयनविषये

"सकलवसुधाधिनाथश्रीमद्बल्लालसेनदेवेन।
अयनद्वयं यथावत् परीक्ष्य संलिख्यते सवितुः॥
इदानीं दृष्टिसंवादादयनं दक्षिणं रवेः।
भवेत्पुनर्वसोरादौ विश्वादावुत्तरायणम्"॥

इत्यनेनायनांशज्ञानं कृतम्। एवमत्र दशांशा अयनांशाः समायान्ति।

अद्भुतसागरस्यागस्त्याद्यावर्त्तसमाप्तौ

"इति महाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते श्रीअद्भुतसागरे अगस्त्यसप्तर्षिध्रुवाद्यद्भुतावर्त्तः"। एवं प्रत्यावर्त्तसमाप्तौ लेखः।

बल्लालसेनदेवविरचितो भोजप्रबन्धश्च बहुत्रोपलभ्यते। अद्भुतसागरग्रन्थस्य सम्पूर्णश्लोकसंख्या न ज्ञायते सम्पूर्णग्रन्थदर्शनाभावात्। परन्तु सागरनामकरणेनायं विपुलो ग्रन्थ इत्यनुमीयत इति।

अद्भुतसागरेऽत्र बहुत्र वटकणिकायाः प्रमाणमभिहितमस्ति परन्तु वटकणिकासंज्ञो ग्रन्थः कश्चिदस्तीत्यस्मादेव ज्ञातोऽस्माभिरतः पूर्वमस्य नामापि न श्रुतमिति।

## केशवार्कः। ११६४

अयमौदीच्यब्राह्मणो भरद्वाजगोत्रो जनार्दनस्य प्रपौत्रो नर्मदातटवासी श्रियादित्यस्य पौत्रो राणगस्य च पुत्रः। भारतवर्षे वधूवरयोर्विवाहविषयेऽशेषविचारविधौ विवाहवृन्दावनाख्याऽस्य कृतिरत्याहताऽस्ति ज्योतिर्विदाम्।

यस्य केशवस्य ताजकपद्धतिः प्रसिद्धा विश्वनाथदैवज्ञकृतोदाहरणसहिता स चास्मादन्यः प्रतिभाति द्वयोः काव्ययोर्महदन्तरत्वात्।



अहो यद्यपि विवाहवृन्दावनान्ते केशवार्केण विस्तरतो निजवंशवर्णनं कृतं परन्तु तत्र समयो न लिखितः। गणेशदैवज्ञकृतायां विवाहवृन्दावनटीकायामादौ प्रथमश्लोकटीकायां "श्रीकेशवार्कः करणकण्ठीरवाद्युक्त्वा" तथा प्रथमाध्यायचतुर्विंशतिश्लोकटीकायां "तदानयनं ग्रन्थकृता करणकण्ठीरवे प्रतिपादितं दिङ्मात्रमत्रोक्त" मित्यादिलेखेन करणोऽपि करणकण्ठीरवाख्याऽस्ति कृतिरस्य याऽद्यावधि न प्राप्ता मया। करणकण्ठीरवेणास्यावश्यमेव समयज्ञानं स्यात्तथाप्येतत्कृतविवाहवृन्दावनप्रथमाध्यायस्य चतुर्विंशतिश्लोकेन "त्रिभागशेषे ध्रुवनाम्नी" त्यादिनाऽऽसन्नसमयज्ञानं भवति। अत्र गणेशदैवज्ञकृतटीकायां "ग्रन्थनिर्माणकाले द्वादश अयनांशा आसन् तदभिप्रायेणेदमुक्तम्" इति लेखेन तदाऽयनांशा द्वादशसमास्तथा प्रतिवर्षेऽयनांशगतिरेका कला तथा वेदवेदवेदमिते ४४४ शके ऽयनांशाभावः कल्प्यते तदा केशवार्कसमयः समुद्ररसैकादशशाकः ११*६४ सिध्यति। अयं समयश्च भास्कररचितकरणकुतूहलसमयादेकोनषष्टिवर्षानन्तरम्।

विवाहवृन्दावनान्ते लग्नशुद्धिप्रकरणस्याष्टमश्लोके वेदा ४ इभाब्धय ४८ इयं किल नार्मदी भेत्यादिना नर्मदातटीयपलभापाठेनायं नर्मदातटवासीति ज्ञायते।

विवाहवृन्दावनषोडशप्रकरणे स्ववंशवर्णने

"अभूद्भरद्वाजमहर्षिवंशे विश्वावतंसे श्रुतितत्त्ववेदी।
औदीच्यचारित्रपथप्रवर्त्ती जनार्दनो याज्ञिकचक्रवर्त्ती॥
अस्ति श्रियादित्य इति स्म तस्य सूनुः श्रियादित्य इव द्वितीयः।
त्रिस्कन्धपारङ्गतरङ्गमल्लस्तदात्मजो राणग इत्युदीर्यें॥
श्रीकेशवः सुकविरध्ययनाध्वनीनव्यूहान् प्रतर्पयितुमर्थपयःप्रवाहैः।
दैवज्ञराणगसुतः सुतपःश्रयेऽस्मिन् वृन्दावने मुनिगवीनिवहं दुदोह"॥

इदं विवाहवृन्दावनं मुद्रितं लिखितं च सर्वत्रैवोपलभ्यते।

## कालिदासगणकः। ११६४

एतत्कृतं ज्योतिर्विदाभरणं मुहूर्त्तविचाररूपं प्रायः सर्वत्र लिखितं मुद्रितं चोपलभ्यते यत्र महिमाप्रभसूरिशिष्यभावरत्नकृता नवषट्सप्तभू १७६९

* अत्रायनांशाभावसमयादिभेदेन कदाचिद्द्वित्राणामब्दानामन्तरं पतेत्।

विक्रमाब्दे वैशाखशुक्लतृतीयायां रवौ समाप्तिं गता सुखबोधिकाख्या टीका च प्रसिद्धा ।

अत्र द्वाविंशत्यध्यायाः सन्ति । आद्याध्यायेषु मुहूर्त्तोपयोगिनीर्नक्षत्रादि-परिभाषा उक्त्वा ततो मुहूर्त्तग्रन्थवत् गर्भाधानादिसंस्काराणां मुहूर्त्ता, यात्रा-गृहप्रवेशादिमुहूर्त्तांश्च प्रतिपादिता ग्रन्थकृता । अन्तिमाध्याये नृपतिविक्रमा-र्कसभावर्णनं विस्तरतः कृतम् । यत्र "कलेरष्टषट्खाग्नि ३०६८ मितगता-ब्देषु मया कालिदासेन ग्रन्थः कृत" इति लिखितमस्ति । तद्यथा

"वर्षे सिंधुरदर्शनाम्बरगुणै ३०६८ र्याते कलेः संमिते
मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः ।
नानाकालविधानशास्त्रगदितं ज्ञानं विलोक्यादरा-
दूर्जे ग्रन्थसमाप्तिरत्र विहिता ज्योतिर्विदां प्रीतये" ॥

अस्यान्तिमाध्यायस्याङ्गलभाषायामनुवादो डाक्टरभाऊदाजीनाम्ना कृतः कविकालिदाससमयनिरूपणे । (See the Literary Remains of Dr. Bhau Daji, p. 10-13)

अयमन्तिमाध्यायो ग्रन्थकृता जगद्वञ्चनया स्वयं विरचितो वा केनचि-दितिहासाऽनभिज्ञेन प्रक्षिप्त इति निःसंशयमयनांशक्रान्तिसाम्यादिसाधनैर्ग्र-न्थस्थैर्विभाति । डाक्टरभाऊदाजीनाम्ना केवलमयनांशसाधनं प्रथमाध्याय-स्याष्टादशश्लोकपूर्वार्द्धेन 'शाकः शराम्भोधियुगो ४४५ नितो हृतो मानं खतर्कै ६० रयनांशकाः स्मृता" इत्यनेन दृष्ट्वाऽस्य समयः षट्शतविक्रमा-ब्दो भ्रमात् * स्थिरीकृतः । क्रान्तिसाम्यसंभवलक्षणं च चतुर्थाध्यायस्य त्रिंशच्छ्लोकेन

"ऐन्द्रे त्रिभागे च गते भवेत्तयोः शेषे ध्रुवेऽपक्रमसाम्यसंभवः ।
यद्येकरेखास्थितभेशचरण्डगू स्यातां तदाऽपक्रमचक्रवालके" ॥

इत्यनेन निर्णीतं प्रकटयति कालिदासगणकस्य समयं केशवार्कसमयसमं निःसंशयम् ; क्रान्तिसाम्ये तद्वत् केशवोक्तेः सिद्धान्तयुक्त्या द्वादशायनांश-समये क्रान्तिसाम्यसंभवस्य तादृक्स्थितेश्च ( केशवार्कवर्णनं विलो-क्यम् ) ।

* "It is cleart hat the auther of the Jyotirvidabharana is sufficiently modern to have confoundep HarshaVikarmaditya of Ujjayani, in the 6th century, with the founder of the Samvat Era.



अधुना निर्णीतेन कालिदासगणकसमयेन रघुवंशकाव्यकर्त्ता कालिदा-सोऽस्मादन्य इति स्पष्टं सिध्यति ।

## महादेवः (१२००) नृसिंहदैवज्ञश्च १४५०

पद्मनाभदैवज्ञपौत्रः परशुरामदैवज्ञपुत्रो गौतमगोत्रो गोदासन्नरासिणस्था-नवासी लाघवेन ग्रहसिद्ध्यै गजाग्नियुग्मभूमिते १२३८ शके माहादेवीं सारणीमरचयत् । पैतामहाऽऽर्यभटजिष्णुजभास्करादिसिद्धान्तसमुद्रतरणायेयं सारणी नौकारूपा कृता महादेवेनेति ग्रन्थारम्भद्वितीयश्लोकेन

"पैतामहार्यभटजिष्णुजभास्करादिसिद्धान्तभेदकठिने नितरामगाधे ।
संख्यार्णवे खचरकर्म्मजले निमग्नज्योतिर्विदां प्रतरणाय दृढोरुनावम्" ॥

इत्यनेन स्फुटम् । अत्रैकवर्षस्य ग्रहाणां गुणकाः पठितास्ते ग्रन्थारम्भ-शकोनेष्टशकेन गुणिता ग्रन्थारम्भक्षेपसहिता इष्टशकीया ग्रहा भवन्ति । अत्र मूलश्लोकसंख्या द्विचत्वारिंशत् ४२ ।

अस्याश्छायारूपैव खनागशक्र १४८० शके रामदैवज्ञसुतनृसिंहेन नन्दि-पुरस्थेन मध्यग्रहसिद्धिरुक्ता ततः स्फुटग्रहसिद्धिर्महादेवसारण्यनुसारिण्येव । माहादेव्यां

"नागाग्न्यर्कोन-१२३८ शाकघ्ना गुणकाः क्षेपसंयुताः ।
पलान्तावादिमौ कार्यौ विपलान्ताः परे ध्रुवाः" ॥

इति २१ श्लोकेन ग्रन्थारम्भशको ज्ञायते । तदा महादेववयोऽष्टत्रिंशद्वर्षमितं चेत्कल्प्यते तदाऽस्य जन्मशको द्वादशशतशकासन्नः समायाति ।

३८ श्लोकेन 'व्यंघ्रिशक्रायने १३ । ४५ काले देशे चाब्धिदला ४ । ३० प्रभे" । इत्यादिना महादेवसमयेऽयनांशाः पादोनशक्राः १३।४५ तत्स्था-नीया पलभा च सार्द्धाब्ध्यङ्गुला ४ । ३० ।

ग्रन्थसमाप्तौ

ईश्वरकौवेरजजौदासमसस्तज्जजोऽग्रजन्मासीत् ।
श्रीजोजदेवनामा गौतमगोत्रः स दैवज्ञः ॥
तत्पुत्रो माधव इति तत्पुत्रः पद्मनाभदैवज्ञः ।
तज्जो गोदासन्ने रासिणके परशुरामदैवज्ञः ॥

सुखबोधिकाख्या टीका

विक्रमाब्दे वैशाखशुक्लतृतीयायां रवौ समाप्तिं गता
च प्रसिद्धा ।

अत्र द्वाविंशत्यध्यायाः सन्ति । आद्यध्यायेषु मुहूर्त्तोपयोगिनीर्नक्षत्रादि-
परिभाषा उक्त्वा ततो मुहूर्त्तग्रन्थवत् गर्भाधानादिसंस्काराणां मुहूर्त्ता, यात्रा-
गृहप्रवेशादिमुहूर्त्ताश्च प्रतिपादिता ग्रन्थकृता । अन्तिमाध्याये नृपतिविक्रमा-
र्कसभावर्णनं विस्तरतः कृतम् । यत्र "कलेरष्टषट्खाग्नि ३०६८ मितगता-
ब्देषु मया कालिदासेन ग्रन्थः कृत" इति लिखितमस्ति । तद्यथा

"वर्षे सिंधुरदर्शनाम्बरगुणै ३०६८ र्याते कलेः संमिते
मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः ।
नानाकालविधानशास्त्रगदितं ज्ञानं विलोक्यादरा-
दूर्जे ग्रन्थसमाप्तिरत्र विहिता ज्योतिर्विदां प्रीतये" ॥

अस्यान्तिमाध्यायस्याङ्गलभाषायामनुवादो डाक्टरभाऊदाजीनाम्ना
कृतः कविकालिदाससमयनिरूपणे । (See the Literary Remains
of Dr. Bhaū Dajī, p. 10-13)

अयमन्तिमाध्यायो ग्रन्थकृता जगद्वञ्चनया स्वयं विरचितो वा केनचि-
दितिहासाऽनभिज्ञेन प्रक्षिप्त इति निःसंशयमयनांशक्रान्तिसाम्यादिसाधनैर्ग्र-
न्थस्थैर्विभाति । डाक्टरभाऊदाजीनाम्ना केवलमयनांशसाधनं प्रथमाध्याय-
स्याष्टादशश्लोकपूर्वार्द्धेन 'शाकः शराम्भोधियुगो ४४५ नितो हृतो मानं
खतर्कै ६० रयनांशकाः स्मृता" इत्यनेन दृष्ट्वाऽस्य समयः षट्शतविक्रमा-
ब्दो भ्रमात् * स्थिरीकृतः । क्रान्तिसाम्यसंभवलक्षणं च चतुर्थाध्यायस्य
त्रिंशच्छ्लोकेन

"ऐन्द्रे त्रिभागे च गते भवेत्तयोः शेषे ध्रुवेऽपक्रमसाम्यसंभवः ।
यद्येकरेखास्थितभेशचण्डगू स्यातां तदाऽपक्रमचक्रवालके" ॥

इत्यनेन निर्णीतं प्रकटयति कालिदासगणकस्य समयं केशवार्कसमयसमं
निःसंशयम् ः क्रान्तिसाम्ये तद्वत् केशवोक्तेः सिद्धान्तयुक्त्या द्वादशायनांश-
समये क्रान्तिसाम्यसंभवस्य तादृक्स्थितेश्च ( केशवार्कवर्णनं विलो-
क्यम् ) ।

*"It is cleart hat the auther of the Jyotirvidabharana is sufficiently modern to have confoundep HarshaVikarmaditya of Ujjayani, in the 6th century, with the founder of the Samvat Era.



अधुना निर्णीतेन कालिदासगणकसमयेन रघुवंशकाव्यकर्त्ता कालिदा-
सोऽस्मादन्य इति स्पष्टं सिध्यति ।

## महादेवः (१२००) नृसिंहदैवज्ञश्च १४५०

पद्मनाभदैवज्ञपौत्रः परशुरामदैवज्ञपुत्रो गौतमगोत्रो गोदासन्नरासिणस्था-
नवासी लाघवेन ग्रहसिद्ध्यै गजाग्नियुग्मभूमिते १२३८ शके माहादेवीं
सारणीमरचयत् । पैतामहाऽऽर्यभटजिष्णुजभास्करादिसिद्धान्तसमुद्रतरणायेयं
सारणी नौकारूपा कृता महादेवेनेति ग्रन्थारम्भद्वितीयश्लोकेन

"पैतामहार्यभटजिष्णुजभास्करादिसिद्धान्तभेदकठिने नितरामगाधे ।
संख्यार्णवे खचरकर्म्मजले निमग्नज्योतिर्विदां प्रतरणाय दृढोरुनावम्" ॥

इत्यनेन स्फुटम् । अत्रैकवर्षस्य ग्रहाणां गुणकाः पठितास्ते ग्रन्थारम्भ-
शकोनेष्टशकेन गुणिता ग्रन्थारम्भक्षेपसहिता इष्टशकीया ग्रहा भवन्ति ।
अत्र मूलश्लोकसंख्या द्विचत्वारिंशत् ४२ ।

अस्याश्छायारूपैव खनागशक्र १४८० शके रामदैवज्ञसुतनृसिंहेन नन्दि-
पुरस्थेन मध्यग्रहसिद्धिरुक्ता ततः स्फुटग्रहसिद्धिर्महादेवसारण्यनुसारिण्येव ।
माहादेव्यां

"नागाग्न्यर्कोन-१२३८ शाकघ्ना गुणकाः क्षेपसंयुताः ।
पलान्तास्त्वादिमौ कार्यौ विपलान्ताः परे ध्रुवाः" ॥

इति २१ श्लोकेन ग्रन्थारम्भशको ज्ञायते । तदा महादेववयोऽष्टत्रिंशद्वर्षमितं
चेत्कल्प्यते तदाऽस्य जन्मशको द्वादशशतशकासन्नः समायाति ।

३८ श्लोकेन 'व्यंघ्रिशक्रायने १३ । ४५ काले देशे चाब्धिदला ४ ।
३० क्षभे" । इत्यादिना महादेवसमयेऽयनांशाः पादोनशक्राः १३।४५ तत्स्था-
नीया पलभा च सार्द्धाब्ध्यङ्गुला ४ । ३० ।

ग्रन्थसमाप्तौ

ईश्वरकौवेरजजौदासमसस्तज्जजोऽग्रजन्मासीत् ।
श्रीजोजदेवनामा गौतमगोत्रः स दैवज्ञः ॥
तत्पुत्रो माधव इति तत्पुत्रः पद्मनाभदैवज्ञः ।
तज्जो गोदासन्ने रासिणके परशुरामदैवज्ञः ॥

तज्जमहादेवेन ग्रहसिद्धेः सिद्धये यतितम् ।
तच्छ्रेयसा भवानी भवश्च भवतु द्विजप्रजावृद्ध्यै ॥

नृसिंहकृतमाहादेवीविवृतिरूपग्रन्थादौ

गजाननेशाच्युतकेन्द्रदेवान् सूर्यादिखेटांश्च गुरून् प्रणम्य ।
वक्ष्ये महादेवकृतादिखेटसिद्धिं चमत्कारकरीं स्फुटां च ॥
"शको व्योमनागेन्द्र १४८० हीनः समौघ" इत्यादि ।

अन्ते "इति श्रीमाहादेव्यां नन्दिपुरस्थरामदैवज्ञात्मजेन नृसिंहदैवज्ञेन मध्यग्रहसिद्धिरुक्ता" इति लेखेन नृसिंहो नन्दिपुरवासिकेशवदैवज्ञसुतरामदैवज्ञस्य गणेशदैवज्ञानुजस्य पुत्रो विष्णुदैवज्ञगुरुरयमेव ( कृष्णदैवज्ञवर्णनं तथा गणेशदैवज्ञवर्णने विश्वनाथोदाहरणस्थश्लोकादिकं च द्रष्टव्यम् )। यद्येतत्कृतिरचनाकाले नृसिंहवयस्त्रिंशद्वर्षसमं कल्प्यते तदास्य जन्मशकः खवाणशक्रमितः १४५० ।

## महेन्द्रसूरिः । १२४२

भृगुपुरनिवासी मदनसूरिशिष्यो मलयेन्दुसूरिगुरुः फीरोजशाहतुगलकनामयवननरपतिसभाप्रधानपण्डितो द्विनवद्वीन्दु १२९२ शके पारसीकभाषातो ध्रुवद्वयदृष्टिवशतो नाडीमण्डलधरातले गोलपृष्ठस्थानां सर्वेषां वृत्तानां रूपाणि परिणमय्य यन्त्रराजाख्यं यन्त्रमकरोत् । अत्र तदीयशिष्येण मलयेन्दुसूरिणोदाहरणरूपा टीका चाकारि । ग्रन्थस्य विलोकनेनास्य तदीयशिष्यस्य मलयेन्दुसूरेश्च गणिते प्रौढिर्न विभाति । इदं यन्त्रराजाख्यं पुस्तकं मलयेन्दुसूरिटीकोपेतं मयोपपत्त्या भूषितं वेदनभोऽष्टरूप १८०४ मिते शके काश्यां चन्द्रप्रभानाम्नि मुद्रायन्त्रालये मुद्रितं च ।

अस्यादौ

श्रीसर्वज्ञपदाम्बुजं हृदि परामृश्य प्रभाव्यं परं
श्रीमन्तं मदनाख्यसूरिसुगुरुं कल्याणकल्पद्रुमम् ।
लोकानां हितकाम्यया प्रकुरुते सद्यन्त्रराजागमं
नानाभेदयुतं चमत्कृतिकरं सूरिर्महेन्द्राभिधः ॥

अन्ते

अभूद्भृगुपुरे वरे गणकचक्रचूडामणिः
कृती नृपतिसंस्तुतो मदनसूरिनामा गुरुः ।



तदीयपदशालिना विरचिते सुयन्त्रागमे
महेन्द्रगुरुणोदिताऽजनि विचारणा यन्त्रजा ॥

मलयेन्दुसूरिकृतटीकादौ

प्रणम्य सर्वज्ञपदारविन्दं सूरेर्महेन्द्रस्य पदाम्बुजं च ।
तनोति तद्गुम्फितयन्त्रराजग्रन्थस्य टीकां मलयेन्दुसूरिः ॥

तदन्ते

श्रीपेरोजमहेन्द्रसर्वगणकः पृष्टो महेन्द्रप्रभु-
र्जातः सूरिवरस्तदीयचरणाम्भोजैकभृङ्गय्युता ।
सूरिश्रीमलयेन्दुना विरचितेऽस्मिन् यन्त्रराजागम-
व्याख्याने प्रविचारणादिकथनाध्यायोऽगमत्पञ्चमः ॥

अत्र परमा क्रान्तिः पञ्चत्रिंशत्कलाधिकात्रयोविंशत्यंशाः २३ । ३५ । सायना द्वात्रिंशन्नक्षत्रध्रुवाश्च सशराः पठिताः प्रथमाध्यायस्य २१-३८ श्लोकैः ।

प्रथमाध्यायस्य ३९ श्लोकेन

"द्विनन्दसूर्यैं १२९२ रहिताच्छकाब्दा-
न्नभोऽश्विशैले ७२० गुणितात्खखेभैः ८०० ।
आप्तं कलाद्येन युतं त्वभीष्टे
वर्षे भवेत्सायननामकं तत्" ॥

इत्यनेन ग्रन्थारम्भशको द्विनवद्वीन्दु १२९२ मितः । प्रतिवर्षं चतुःपञ्चाशद्विकला अयनांशगतिश्च ज्ञायते । अत्र दृक्कर्म्मानियनं न समीचीनम् , तथात्र गणिताध्यायः , यन्त्रघटनाध्यायः , यन्त्ररचनाध्यायः । यन्त्रशोधनाध्यायः, यन्त्रविचारणाध्याय इति पञ्चाध्याया अनुष्टुप्सहस्रश्लोकैः सटीकैः सन्ति । मूलग्रन्थश्च नानाविधैः कराष्टेन्दु १८२ संख्यैर्वृत्तैर्निबद्धोऽस्ति । प्रथमाध्याये प्रतिसायनभागोत्थक्रान्त्यंशाः प्रतिभागज्योत्क्रमज्यामानानि नाडीमण्डलधरातले परिणतानां वृत्तानां व्यासकेन्द्रज्ञानार्थं प्रतिभागद्युज्याखण्डानि च षड्राशिसम्बन्धीनि खाष्टरूप १८० मितानि साधितानि । अयं ग्रन्थः कस्यचित्पारसीग्रन्थस्य संस्कृतेऽनुवादो, न स्वातन्त्र्येण महेन्द्रसूरिकृत इति प्रतीयते ॥

ग्रन्थारम्भसमये यद्यस्य वयः पञ्चाशत्कल्प्यते तदा जन्मशको द्विवेदद्वादश १२४२ समः समायाति ।

## महादेवः । १२७६

बोपदेवस्य तनयो गोदातीरस्थत्र्यंबकाख्यनृप-
अयं कौडिन्यगोत्रस्य कामधेनुनाम
सभायामग्रगण्यो ब्रह्मार्यभटमतद्वयानुसारेण पञ्चाङ्गसाधनार्थं इदं करणं सारणीसहितं
करणं नवसप्तयुग्मभूमिते १२७६ शके व्यरचयत्। मन्मित्रश्रीसिद्धेश्वर-
पञ्चत्रिंशच्छ्लोकात्मकमतिप्राचीनं दुर्लभं काश्यां
ज्योतिर्विन्निकटे वर्त्तते। अस्यैव कामधेनुगणितस्य टीका रामदैवज्ञपित्राऽन-
इयं टीका च नोपलब्धा मयाद्यावधि।
न्तदैवज्ञेन कृता।

कामधेन्वादौ

प्रणम्य पुष्पदन्ताख्यं शारदां गणनायकम्।
तिथिसिद्धिं कामदुघां करोम्यल्पामतिस्फुटाम्॥
सिद्धिः पक्षद्वयस्यात्र न कर्मजडताऽस्ति च।
तिथ्यादीनां भवत्यग्रयापटे द्वाविंशकोष्ठके॥
नवाद्र्यर्कोन १२७६ शाकघ्ना गुणाः क्षेपयुता ध्रुवे।

अन्ते

आसीत्कौडिन्यगोत्रो द्विजवरतिलको बोपदेवाभिधानः
श्रौतस्मार्त्तार्थनिष्ठो नृहरिपदयुगाराधकानामभीष्टः।
तज्जश्चक्रे परेशे सुदृढधृतमतिः श्रीमहादेवनामा
गोदास्थे त्र्यम्बकाख्ये नृपसदसि मतः कामधेनुं सुबोधाम्॥

अनन्तदैवज्ञादीनां समये कामधेनुगणितस्य महान् प्रचार आसीदित्यन-
न्तदैवज्ञटीकाकरणेन तथा मुहूर्त्तचिन्तामणौ रामदैवज्ञवर्णनेनैव ज्ञायते।

## गङ्गाधरः । १३५६

अयं विन्ध्याचलदक्षिणप्रान्तस्थसगरनगरनिवासी चन्द्रभट्टतनूजः कलेः पञ्चत्रयपञ्चाब्धि ४५३५ वर्षगणे व्यतीते रसशराग्निभूमिते १३५६ शके सम्प्रति प्रचलितसूर्यसिद्धान्तानुसारं चान्द्रमानाभिधानतन्त्रं व्यरचयत्। तत्र तद्वंशीयविश्वनाथेनोदाहरणादिना विवृतिश्च कृता। ग्रन्थादौ ग्रन्थकृता स्ववंशवर्णनं कृतं विस्तरतः। तद्यथा



श्रीसूर्याय नमो नित्यं ऋग्यजुःसाममूर्त्तये।
सच्चिदानन्दरूपाय जगदेकाम्बकाय च॥
अस्मिन् भूमण्डले जम्बूद्वीपे भारतवर्षके।
खण्डे च भारते मेरोर्विन्ध्यसंज्ञाच्च दक्षिणे॥
समभूमध्यरेखायां श्रीशैलात्पश्चिमाश्रिते।
कृष्णावेणीभीमरथ्योर्मध्ये जगति पावने॥
सगरं नाम नगरं जगत्यद्यापि विश्रुतम्।
श्रीमत्सूर्यकुलोत्पन्नसगरेण विनिर्मितम्॥
तस्मिंस्तु नगरे श्रीमज्जमदग्निकुलोद्भवः।
लक्ष्मीनृसिंहभक्तोऽभूद्भूसुरो विट्ठलाह्वयः॥
वेदवेदाङ्गशास्त्राणामागमानां च तत्त्ववित्।
तस्यात्मजस्तु भट्टार्यो विद्वान् विष्णुपरायणः॥
तत्पुत्रश्चन्द्रभट्टाख्यो ज्योतिःशास्त्रकलानिधिः।
गङ्गाधरस्तु तत्पुत्रः सर्वशास्त्रविशारदः॥
तेन संगृह्य रचितं सूर्यसिद्धान्तसंमतम्।
चान्द्रमानाभिधं तन्त्रं कुशलानन्दकारकम्॥

"वर्त्तमाने कलौ पञ्चत्रिपञ्चाब्धि ४५३५ समाः समाः" इति ३७ श्लोकेन ग्रन्थारम्भशको ज्ञातोऽस्माभिः। अत्र मनुमानानन्तरमन्तरासुकालविधिविनाडिकादिमानं सम्प्रति ज्ञातसूर्यसिद्धान्ताद्विशिष्टम्।

चान्द्रमानस्य पुस्तकमेकमतिजीर्णं काशिकराजकीयपुस्तकालये वर्तते तत्र द्वितीयाध्यायस्य २-४ श्लोकाश्च

गङ्गाधराख्यस्य कुले प्रसूतो यथा सुधाब्धौ द्विजराज एषः।
भूभास्करो भूमिसुराग्रगण्यो भूमण्डले दैवविदां वरिष्ठः॥
श्रीचन्दलो लब्धवरो यशस्वी श्रीमान् कृती सौरमताभिमानी।
विद्यापुरस्थो नृपतिप्रियोऽभूद्वेदान्तनामा जगति प्रतीतः॥
तत्पुत्रो विश्वनाथस्तनुमतिरपि यच्चान्द्रमानाभिधानं
तन्त्रं गङ्गाधरोक्तं पदविषमतयात्यन्तगूढं विदित्वा।
तन्नाम्नैवाङ्कितं तत्पुनरपि मृदुभिर्भिन्नपद्यैस्तदङ्कैः
स्पष्टं देवीप्रसादाद्गणकमुदे कर्त्तुमस्म्युद्यतोऽहम्॥

द्वे सन्ति। चान्द्रमानाख्यमेवेति सिध्यति। काशिक-

एतेभ्यो विश्वनाथकृतं चापि चान्द्रमानाख्यमेवेति सिध्यति। काशिक-राजकीयपुस्तकालयपुस्तके च कालमीमांसाध्यायः, मासध्रुवमध्यमहाधिकारः, मासध्रुवाधिकारः (अस्मिन् अधिकारे चान्द्र-रवीन्दुस्फुटीकरणतिथ्यधिकारः, मासध्रुवाधिकारः (अस्मिन् अधिकारे चान्द्र-मासौघाद् रव्यादिध्रुवकाः साधिताः), सौरमानाध्यायः, प्रकारान्तरेण मध्य-ग्रहाधिकारः (अत्र कल्पादिध्रुवतो मध्यग्रहानयनम्), स्पष्टाधिकारः (अत्र त्रिज्या भूनन्देन्दु १९१ मिता गृहीता), एतेऽध्याया सन्ति। सम्पूर्णग्रन्थ-संख्या श्लोकशतद्वयासन्ना।

## मकरन्दः। १३६०

अनेन चतुर्दशशत १४०० शके सूर्यसिद्धान्तानुसारं तिथ्यादिसाधनार्थं सारणीरूपो निजनामप्रसिद्ध्यर्थं स्वनाम्नैव ग्रन्थो वाराणस्यां विरचितः। मकरन्दः पुष्परसस्तदुत्पत्तिश्च तरोस्तरुणातरूत्पत्तिश्च कन्दादिना चातो मक-रन्दनामकं ग्रन्थं कुर्वता मकरन्देन तत्र ध्रुवकादीनां संज्ञाः कन्दवल्लीलता-गुच्छादयः कल्पिताः। सम्प्रति काशीमिथिलादिप्रदेशेषु मकरन्दत एव साध-यन्ति सुधियस्तिथिपत्रम्।

मकरन्दादौ

> श्रीसूर्यसिद्धान्तमतेन सम्यग् विश्वोपकाराय गुरूपदेशात्।
> तिथ्यादिपत्रं वितनोति काश्यामानन्दकन्दो मकरन्दनामा॥

ग्रन्थादिसारणीतो ग्रन्थारम्भशकश्चतुर्दशशत १४०० समो ज्ञायते। भारतवर्षे सम्प्रति मकरन्दमेवाधीत्याऽऽत्मानं कृतकृत्यं मन्यन्ते प्रायः फलित-वेदिनो ज्योतिर्विदः। मकरन्दस्यान्याः कृतयो न कुत्रचिदुपलभ्यन्ते कुत्रापि तन्नामापि न दृष्टमतोऽस्यान्या कृतिः काचिन्नेत्यवबुध्यते। ग्रन्थारम्भसमये-ऽस्य वयश्चेच्चत्वारिंशद्वर्षसमं कल्प्यते तदाऽस्य जन्मशकः खरसविश्वमितः १३६० समायाति।

मकरन्दोपरि दिवाकरदैवज्ञकृतविवरणं (दिवाकरवर्णनं विलोक्यम्), विश्वनाथकृतमुदाहरणं च प्रायः सर्वत्रैव लिखितं मुद्रितं चोपलभ्यते। एका गोकुलनाथकृतोपपत्तिरूपा टीका चास्त्यस्य सा च वस्तुतः शुद्धा बहु-माऽऽयासेन प्राचीनज्योतिर्विदां गृहेषु प्राप्यते। अत्र ग्रहसाधनार्थं याः



सारण्यः सन्ति तासामेवानुवादोऽङ्गलभाषायां जान्बेण्टलीसाहिबेन कृतः (See "A Historical View of the Hindu Astronomy" by John Bentley, Appendix, No. I.)। बेण्टलीसाहिबमुद्रिताः सार-ण्योऽत्यशुद्धाः सन्ति तासां पुनः संस्करणं समुचितम्॥

## केशवः। १३७८

अयं कमलाकरनन्दनो वैद्यनाथशिष्यः कौशिकगोत्रोद्भवो गणेशदैवज्ञ-जनक आसीत्। अस्य जन्मस्थानं पश्चिमसमुद्रतीरवर्त्तिनन्दिग्रामे।

केशवेन ग्रहकौतुकम्, वर्षग्रहसिद्धिः, तिथिसिद्धिः, जातकपद्धतिः, जात-कपद्धतिविवृतिः, ताजकपद्धतिः, सिद्धान्तवासनापाठः, मुहूर्त्ततत्त्वम्, कायस्था-दिधर्म्मपद्धतिः, कुण्डाष्टकलक्षणम्, गणितदीपिका, इत्यादयो ग्रन्था विर-चिता इति तत्तनयगणेशदैवज्ञकृतमुहूर्त्ततत्त्वटीकामुहूर्त्ततत्त्वदीपिकास्थवच-नेन

> "सोमाय ग्रहकौतुकं खगकृतिं तच्चालनाख्यं तिथेः
> सिद्धिं जातकपद्धतिं सविवृतिं तत्ताजके पद्धतिम्।
> सिद्धान्तेऽप्युपपत्तिपाठनिचयं मौहूर्त्ततत्त्वाभिधं
> कायस्थादिजधर्म्मपद्धतिमुखं श्रीकेशवार्योऽकरोत्"॥

इत्यनेन तथा मुहूर्त्ततत्त्वदीपिकाप्रथमश्लोकटीकया ज्ञायते। ग्रहकौतुक-जातकताजकपद्धतिमुहूर्त्ततत्त्वग्रन्थान विहायान्ये न दृष्टा मयाद्यावधि। तत्र ग्रहकौतुके करणारम्भशकोऽष्टेन्दुशक्र१४१८समः परन्तु तत्तनूजगणेशदैवज्ञ-विरचितग्रहतिथिचिन्तामणिस्थवचनानुसारतो ग्रहकौतुकानन्तरं षष्टिमितेऽब्दे गणेशेन ग्रहलाघवाख्यकरणमकारीति तद्वचनं वक्ष्यमाणं ज्ञायते। ग्रहलाघव-स्यारम्भशको द्विवेदशक्र १४४२ मितो ग्रहकौतुकस्य चाष्टेन्दुशक्र १४१८ मितशकः समयस्तदन्तरे चतुर्विंशतिवर्षगणत्वात्। ग्रहकौतुकारम्भे यदि केशववयश्चत्वारिंशद्वर्षसमं कल्प्यते तदा केशवजन्मशकोऽष्टसप्तविश्वमितः १३७८ समायाति।

मुहूर्त्ततत्त्वान्ते

> ज्योतिःशास्त्रमहार्णवादुदहरन्मौहूर्त्ततत्त्वं बहु-
> व्याप्यल्पं गुरुवैद्यनाथचरणद्वन्द्वे रतः केशवः।

नन्दिग्रामगतः सुतस्तु कमलज्योतिर्विदग्र्यस्य त-
द्योऽधीते स विराजते सदसि चाद्देशी यशस्वी क्षितौ ॥

इत्यनेन श्लोकेन केशवस्य पितुर्गुरोश्च नाम स्फुटम् । मुहूर्त्ततत्त्वे पूर्वखण्डे गर्भाधानादिसंस्कारमुहूर्त्ता उत्तरखण्डे च संहितावत् चारवशेन शुभाशुभलक्षणानि सम्यग्वर्णितानि । अस्य सम्प्रति यद्यपि जातकताजकपद्धतिमुहूर्त्ततत्त्वग्रन्थाः प्रसिद्धास्तथापि तेषु जातकपद्धतिर्ज्योतिर्विद्भिः सर्वैरादृता वस्तुत आदरणीया बहुभिः प्रौढगणककृतटीकाभिर्भूषिता प्रकटयति पाण्डित्यं गणितप्रागल्भ्यं च निजनिर्मातुर्विशेषविधातुः केशवरूपस्य केशवस्य । एते त्रयो ग्रन्था लिखिता मुद्रिताश्चोपलभ्यन्ते । अस्यैव केशवस्य पौत्रो लक्ष्मीदास इति कोलब्रूकसाहिबस्य संशय-(* Probably the same with the father of Ganesa before mentioned)"श्च लक्ष्मीदासवर्णनविलोकनेन निवृत्तो भवति यतः स केशव उपमन्युगोत्रोद्भवोऽयं च कौशिकवंशीय इति ।

पट्टं † विनाऽन्यकरणपन्थैराशु गणितं न भवति केशवेन च लघुगुणनभजनकर्म्मणा लघुना गणितेन खेटकर्म्म कृतं तदर्थमेव ग्रहकौतुककरणाकरणकारणं चावर्णि ।

ग्रहकौतुकारम्भे

नत्वाऽऽयाजकशम्भुशम्भुजखगान् ज्योतिर्विदां प्रीतये
वक्ष्ये सद्ग्रहकौतुकं घटिकया सर्वग्रहज्ञानदम् ।
स्थूलं चेति न वाच्यमत्र खचरा दृष्टिप्रतीता यतो
ब्राह्माद्येषु महान्तरं ज्ञसितयोर्मन्दे च खे दृश्यते ॥
सूक्ष्माणि सन्ति करणान्यपि सान्तराणि
पट्टं विनाऽऽशु न भवन्ति खगा यतस्तैः ।
एतच्चमत्कृतिकरं कृतमल्पकृत्यं
खेटान् स्फुटान् वद सदस्यमुनाऽऽगतान् द्राक् ॥

* See Colebrooke's Algebra, p. XXVIII.

† गणितकरणार्थं काष्ठपट्टिकेष्टिकाचूर्णपूरिता प्राचीनैर्धार्यते सम्प्रति यूरपदेशीयरीतितो नव्याश्च शिलापट्टिकां धारयन्ति तत्र सुखेन स्वच्छतया च धूलीकर्म्म विनैव गणितं भवति ।



धृतिसुरपति १४१८ हीनोऽयं शकोऽब्दव्रजोऽसावित्यादि ।
अन्ते च

मध्यस्पष्टखगोदयास्तकुटिलावक्रत्वपश्चाङ्गदिग्-
भार्कादिद्युतिकाललग्ननलिकायन्त्रोपरागादिकम् ।
शृङ्गौच्च्यं ग्रहयोगभग्रहयुती पातं सभायां वदेद्-
द्राग् ज्ञातग्रहकौतुकः स च लभेल्लक्ष्मीं यशो गौरवम् ॥
नन्दिग्राम इहापरोदधितटे श्रेष्ठे द्विजाग्र्योऽभवज्-
ज्योतिर्वित्कमलाकरो द्विजवरस्तस्यात्मजः केशवः ।
शिष्याणां सदसि ग्रहग्रहमुखं वक्तुं स्फुटं हेलया
हित्वा वर्त्तनपट्टिकां हि कृतवान् सत्खेटकौतूहलम् ॥

इदं ग्रहकौतुकं पञ्चशतश्लोकात्मकं मध्ये मध्ये ग्रहोपयोगिसारणीसहितमतिप्राचीनं प्रायः शुद्धं दर्शनार्हं काश्यां जडेत्युपाख्यश्रीरामचन्द्रदीक्षितसदने वर्त्तते । अत्र ये विषयास्ते तु ग्रन्थान्तादिश्लोकेनोपरिलिखितेन स्फुटा एव । अयमस्य सुतो गणेश उभौ निजवाग्बलेनैवाऽऽत्मग्रन्थप्रशंसिनौ ।

## लक्ष्मीदासः । १४२२

अयमुपमन्युगोत्रोद्भवस्य केशवस्य पौत्रो वाचस्पतेः पुत्रः नागनाथाज्ञया निजसुहृद्देवनाथप्रार्थनया निजानुजोर्वीधरप्रीतये युग्मयुग्मशक्रमिते १४२२ शके भास्करीयसिद्धान्तशिरोमणिटीकामुदाहरणोपपत्तिसहितां गणिततत्त्वचिन्तामणिसमाख्यां व्यधात् । अत्र लेखः प्रौढो नोपपत्तयश्च चतुरजनमनश्चमत्कारिण्यो न । इयं लक्ष्मीदासी टीकाऽऽयासेन प्राचीनज्योतिर्विदां गृहेषूपलभ्यते ।

गणिताध्यायगणिततत्त्वचिन्तामणेरादौ मङ्गलानन्तरम्

श्रुतिस्मृतिविचारणाचरणचारुचित्तः शुचि-
र्विवेकविनयास्पदं सदुपमन्युगोत्रः कृती ।
मुकुन्दचरणार्चनाविरचनाप्रपञ्चः सुधी-
र्बभूव विभवार्चितार्थिजनसंचयः केशवः ॥
समुद्धृतवसुंधरा विबुधमोहविध्वंसनोऽ-
त उद्धरण उद्धुरप्रथितवादिविद्रावणः ।

बभूव हुतभुक्त्रयप्रगुणहोमधूमोद्धृत-
प्रधानकलिकल्मषः प्रियसखः प्रबोधोन्मुखः ॥
अस्मादासीदसीमप्रवरगुणगरिष्ठत्वपादोपरिष्टः
प्रेमोल्लासिप्रमेयप्रथितविविधबंधो वितन्द्रः कवीन्द्रः ।
ख्यातो वाचस्पतिः स्वप्रचुररुचिरया कार्त्तिकेन्दूत्थकान्त्या
शुभ्रांशुश्रीशनोर्कारगुरुरविभकक्षा वलक्षाश्चकार ॥
तस्माद्दानविवेकतोषितजगन्माधुर्यधुर्यात्तथा
साध्वीनां धुरि सद्यशो भुवि वसावत्यां जनिं प्राप्तवान् ।
लक्ष्मीदास इति द्विजन्मचरणद्वन्द्वारविन्दोद्गत-
स्वामोदाकुलसङ्कुलालिविलसल्लालित्यलीलालयः ॥

एवं दशमद्वादशश्लोकौ
शिरोमणिविबोधने सुजननागनाथेरितः
सुहृद्गुणगणाकरप्रगुणदेवनाथार्थितः ।
हितैरनघराघवैरपि निजानुजोर्वीधर-
प्रियपतिविधेयस्मि विविधप्रयत्नोन्मुखः ॥
सुधाविमलचेतसि स्वगुरुपादपद्मद्वयं
विधाय गणनायकं मुरविदारणं भारतीम् ।
उपास्य गुरुसद्गिरः सदुपयोगिसिद्ध्यै ब्रुवे
शिरोमणिविकाशनं गणिततत्त्वचिन्तामणिम् ॥

गणिताध्यायाष्टाविंशतिश्लोकटीकायां "वर्त्तमानकालीनशालिवाहन-शकः १४२२ एभिरन्विता १९७२९४८६०१ एते वर्त्तमाने ब्रह्मणो दिने गताब्दा जाताः" । अनेनैव ग्रन्थारम्भशको ज्ञातः । अन्तिमग्रन्थोऽस्माभि-र्नोपलब्ध इति ।

बहूनां मते लक्ष्मीदासस्य लक्ष्मीनाथ इति नामान्तरम् । एतत्कृता भास्करीयलीलावतीटीका चोपलभ्यते यत्र सर्वा उपपत्तयो व्यक्तेनैव कृताः सन्ति ।

## ज्ञानराजः । १४२५

अयं नागनाथनन्दनः पञ्चकरशक्रमिते १४२५ शके सिद्धान्तसुन्दराभिधं ज्यौतिषसिद्धान्तं व्यधात् । अत्र प्रथमं गोलाध्यायस्ततो गणिताध्यायः ।



गोलाध्याये सृष्टिक्रमः लोकसंस्था, गोलवासना, छेद्यकवर्णनम्, मण्ड-लवर्णनम्, यन्त्रमाला ( यन्त्रमालायां स्वबुद्ध्या च कल्पितं यन्त्रं ज्ञानरा-जेन), दृक्कर्म्म, ऋत्वादिमानम्, ग्रहयुत्यधिकारः, पाताधिकारः, सप्तर्षीणां ध्रुवकादि, एतेऽध्यायाः सन्ति । तत्र सृष्टिक्रमो लोकसंस्था चेतिद्वयं प्रथमा-ध्यायान्तर्गतम्, एवं गणिताध्याये मध्यमाधिकारः, स्पष्टाधिकारः, त्रिप्र-श्नाधिकारः, पर्वसम्भवाधिकारः, चन्द्रपर्वाधिकारः, सूर्यपर्वाधिकारः, शृङ्गोन्नत्यधिकारः, एतेऽध्यायाः सन्ति । अत्र सिद्धान्ते बहुत्र पुराणमतख-ण्डनं भास्कराचार्यमतखण्डनं कृतमस्ति । कुत्रचित्कल्पना युक्तियुक्ताऽपरत्र सर्वत्र "चन्द्रबिम्बं रविणा नोज्ज्वलमि" त्यादिकल्पना गोलयुक्तिबहिर्भूता जल्पनापूर्णा कवितापरा च ।

गोलाध्यायद्वितीयश्लोकेन
'यन्नामाक्षररश्मिभिस्तनुगतैः किञ्चित् कलावान् भवेत्
भक्तः स्वान्तनिशाकरोद्धततमास्तत्रोच्चरद्भिः क्रमात् ।
भक्तानां भुवनेश्वरीमपि गुरुं सिद्धान्तसत्सुन्दरं
सुज्ञानन्दकरं करोमि चतुरज्ञानाधिराजः स्फुटम्" ॥

इत्यनेन ग्रन्थकृन्नाम ।
लोकसंस्थावर्णनोपसंहारे

"इत्थं श्रीमन्नागनाथात्मजेन प्रोक्ते तन्त्रे ज्ञानराजेन रम्ये ।
ग्रन्थागाराधारभूते प्रभूते गोलाध्याये लोकसंस्था निरुक्ता" ॥
इत्यनेन तत्पितुर्नाम च स्फुटम् ।

एवं प्रत्याध्यायसमाप्तौ श्लोकाः सन्ति ।

गणिताध्यायमध्यमाधिकारे लघ्वहर्गणानयने

"सांघ्रिशक्रशत १४२५ शोधितो भवेच्छालिवाहनशकोऽब्दसञ्चयः ।
सङ्गुणः खगगुणेन योजितः क्षेपकेण शरदि ध्रुवो भवेत् ॥"

इत्यनेन श्लोकेन ग्रन्थारम्भशकः सांघ्रिशक्रशतसम १४२५ स्फुटः ।

सिद्धान्तसुन्दरस्यैका प्रतिः संपूर्णा प्रायः शुद्धा प्राचीना काशिकराज-कीयपुस्तकालये स्थापिताऽस्ति यत्र षड्वसुशरचन्द्रसम १५८६ शको लिपिकालः ।

भास्करीयवीजच्छायानुरूपमुपलभ्यते यत्र
एतत्कृतं बीजगणितं च भास्करीयवीजगणितसूत्रस्य खण्डनं कृतं
"सरूपके वर्णकृती तु यत्रे" ति
ज्ञानराजेन ।

## गणेशः । १४२६

भारतवर्षेऽयं गणेशो गणे-
अस्य पिता गुरुश्च केशवो माता लक्ष्मीनाम्नी ।
अयं त्रयोदशवर्षसमवयसि ग्रहलाघवाख्यं करणमकरोत्
शावतार इति कथ्यते । ग्रहलाघवस्य समयश्च ग्रहलाघवीयाहर्गणानयनात्
इति चिराज्जनश्रुतिः । शकस्तेन गणेशज-
"द्वयब्धीन्द्रोनितशक" इत्यस्माद्युग्मवेदपुरन्दर १४४२ अयं गणिते चात्यन्तप्र-
न्मशकश्च नवाक्षिशक्र १४२६ समः समायाति । ग्रहसाधनमित्यस्य ग्रहलाघवे
वीणः । कल्पादेरहर्गणस्य खण्डत्रयं कृत्वा पूर्वाचार्यास्पृष्टा प्रकटयति
कल्पना वस्तुत आदरणीया सर्वगणकमान्या
पाण्डित्यं ज्योतिर्विद्वरस्य गणेशस्य ।
विश्वनाथकृतग्रहलाघवोदाहरणादौ विश्वनाथस्य
"गणेशदैवज्ञेन ये ग्रन्थाः कृतास्ते तद्भ्रातृपुत्रेण नृसिंहज्योतिर्विदा
स्वकृतग्रहलाघवटीकायां श्लोकद्वयेन निबद्धास्तद्यथा

> कृत्वादौ ग्रहलाघवं लघुबृहत्तिथ्यादिचिन्तामणिं
> सत्सिद्धान्तशिरोमणेश्च विवृतिं लीलावतीव्याकृतिम् ।
> श्रीवृन्दावनटीकिकां च विवृतिं मौहूर्त्ततत्त्वस्य वै
> सच्छ्राद्धादिविनिर्णयं सुविवृतिं छन्दोऽर्णवाख्यस्य वै ॥
> सुधीरञ्जनं तर्जनीयन्त्रकं च सुकृष्णाष्टमीनिर्णयं होलिकायाः ।
> लघूपाययातांस्तथान्यानपूर्वान् गणेशो गुरुर्ब्रह्मनिर्वाणमापत्" ॥

इति लेखेन गणेशेन ग्रहलाघवम्, लघुतिथिचिन्तामणिः, बृहत्तिथिचि-
न्तामणिः, सिद्धान्तशिरोमणिटीका, लीलावतीटीका, विवाहवृन्दावनटीका,
मुहूर्त्ततत्त्वटीका, श्राद्धादिनिर्णयः, छन्दोऽर्णवटीका, सुधीरञ्जनी, तर्ज-
नीयन्त्रम्, कृष्णजन्माष्टमीनिर्णयः, होलिकानिर्णयः, इत्यादयो ग्रन्था
विरचिताः । ग्रहलाघवलघुतिथिचिन्तामणिबृहत्तिथिचिन्तामणिलीलावती-
विवाहवृन्दावनमुहूर्त्ततत्त्वटीका एते ग्रन्था प्रसिद्धास्तेषु ग्रहलाघवमेव सर्वज्योति
र्विद्भिरादृतं लिखितं मुद्रितं च प्रायः सर्वत्रैव शोभते यत्र बहूनां प्रगल्भगण-
कानां च चमत्कृतवासनामण्डिता विवृतयश्च राजन्ति । अन्ये ग्रन्था बहु-
नाऽऽयासेनोपलभ्यन्ते । एतत्कृता लीलावतीटीका बुद्धिविलासिनीति कथ्यते ।



ग्रहलाघवे सर्वे विधयो ज्याचापकर्म विनैव लिखिताः सन्ति । तदन्ते

> पूर्वे प्रौढतराः क्वचित्किमपि यच्चक्रुर्धनुर्ज्ये विना
> ते तेनैव महातिगर्वकुभृदुच्छृङ्गेऽधिरोहन्ति हि ।
> सिद्धान्तोक्तमिहाखिलं लघु कृतं हित्वा धनुर्ज्ये मया
> तद्गर्वो मयि मास्तु किं न यदहं तच्छास्त्रतो वृद्धधीः ॥
> नन्दिग्राम इहापरान्तविषये शिष्यादिगीतस्तुति-
> र्योऽभूत् कौशिकवंशजः सकलसच्छास्त्रार्थवित् केशवः ।
> सूनुस्तस्य तदंघ्रिपद्मभजनाल्लब्ध्वाऽवबोधांशकं
> स्पष्टं वृत्तविचित्रमल्पकरणं चैतद्गणेशोऽकरोत् ॥

भास्कराचार्येण निजकृतकरणकुतूहले छायासाधनं ज्याचापकर्मान्तरा
कृतं तदर्थमात्मप्रशंसा च "इति कृतं लघुकार्म्मुकशिञ्जिनीग्रहणकर्म्म
विना द्युतिसाधनम्" इत्यनेन कृता तदर्थं "पूर्वे प्रौढतरा" इत्यादि विलि-
खति गणेशः । पूर्वश्लोके "तद्गर्वो मयि मास्तु" इत्यनेनायमतिसज्जनो-
ऽभिमानशून्य इति प्रतिभाति । ग्रहलाघवादौ यद्यपि ग्रहलाघवाख्यस्वकृत-
करणप्रशंसायां द्वितीयश्लोके

> "परिभग्नसमौर्विकेशचापं दृढगुणहारलसत् सुवृत्तबाहु ।
> सुफलप्रदमात्तनृप्रभं तत्स्मर रामं करणं च विष्णुरूपम्" ॥

इत्यस्मिन् स्वकरणं दृढगुणहारलसदित्यवोचद्गणेशः । अर्थादस्मिन् करणे
गुणहारौ दृढावनपवर्त्यौ स्त इति प्रतिज्ञा कृता गणेशेन तथापि तस्या भङ्गश्च
स्पष्टाधिकारस्याष्टादशश्लोके

> "वक्रोदयादिगदितांशकतोऽधिकाल्पाः
> केन्द्रांशकाः क्षितिसुताद् द्विगुणास्त्रिभक्ताः ।
> साङ्कांशका दशहताङ्गहृताः कुभक्ता
> वक्राद्यमाप्तदिवसैः क्रमशो गतैष्यम् ॥

इत्यस्मिन् "दशहताङ्गहृता इत्यत्र भवति यतोऽत्र द्वाभ्यामपवर्त्तनप्रसङ्गः ।

मुहूर्त्ततत्त्वटीकादौ

> श्रीमत्स्यध्वजताललक्ष्मसहितं विद्याधरैः सेवितं
> लक्ष्मीसच्छयलालितं विधिपुरोगाराधितं सिद्धये ।

यद्ग्रन्थाम्बु सुदुर्लभं सुमनसामप्याप्तरत्नाकर
वन्देऽभीप्सितकामदं निजगुरुश्रीकेशवाङ्घ्र्यम्बुजम् ॥

एवं ३-४ श्लोकौ

तत्रैतद्धि मुहूर्त्ततत्त्वममलं संक्षिप्तगूढाक्षरं
गूढार्थं निखिलार्थमर्थबहुलं हेलावगम्यं विदाम् ।
मन्दानां त्वतिदुर्गमं खलु ततस्तेषां सुबोधा यथा
नानाशास्त्रविशेषयुक्तिबहुलां तद्व्याकृतिं प्रारभे ॥
तत्सूनुर्निजपितृसद्गुरुप्रसादात्सम्प्राप्तस्मृतिमुखसर्वशास्त्रबोधः।
गर्गाद्यागमचयदर्शनाद्गणेशः पश्यन्तु त्विह सुजनाः सुकौशलं मे ॥

अत्र प्रथमः श्लोकोऽर्थद्वयवाची विष्णुपक्षे गणेशदैवज्ञपितृकेशवपक्षे च । तदर्थद्वयं तत्रैव स्वयं टीकाकृता गणेशेन व्याख्यातम् ।

एवं विवाहवृन्दावनटीकादिश्लोकाः

तीर्थानामधिपः कुभृच्छ्रितपदोऽसंत्यक्तवेलास्थिति-
र्यत्पर्याप्तकलद्विजाधिपसमीक्षाप्तोरुमुत्पूरभृत् ।
लक्ष्मीशोऽखिलदानवारिसततप्रस्निग्धसद्मक्षिति-
र्धोघध्वस्तमलो जयत्युरुकृपासिंधुर्गुरुः केशवः ॥

अयमर्थचतुष्टयवाची गुरुपक्षे विष्णुपक्षे समुद्रपक्षे सूर्यपक्षे च । अर्थचतुष्टयरूपं व्याख्यानं च तत्रैव कृतं स्वयं टीकाकृता । तत्रैव पञ्चमश्लोके विवाहवृन्दावनटीकाप्राक्स्वकृतयश्च कथितास्तद्यथा

कृत्वादौ ग्रहलाघवाख्यकरणं तिथ्यादिसिद्धिद्वयं
श्लोकैः श्राद्धविधिं सवासनतया लीलावतीव्याकृतिम् ।
सप्रक्षेपमुहूर्त्ततत्त्वविवृत्तिं पर्वादिसन्निर्णयं
तस्मान्मङ्गलनिर्णयाद्यथ कृता वैवाहसद्दीपिका ॥

तदन्ते

पश्चात्सागरपूर्ववर्त्तितटगे ग्रामेऽत्र नन्द्यादिमे
रम्भापूगरसालशीर्षनिचुलच्छायाविताने वसन् ।
नानाशास्त्रकलाकलापचतुरः श्रीकेशवोऽस्यात्मज-
ष्टीकां युक्तिमतीं गणेशविबुधो वृन्दावनस्याऽकरोत् ॥



रसनगमनु १४७६ तुल्ये शाके आनन्दवर्षे
विवृतिमकृत शस्तां दीपिकाख्यां गणेशः ।
यदिह लिखितमल्पानल्पकं वा सदोषं
तदतिविमलधीभिः शोध्यमित्यर्थये तान् ॥

पूर्वश्लोकाः प्रकटयन्ति काव्यसाहित्यपाटवं ग्रन्थकृतोऽन्तिमश्च विवाह-वृन्दावनटीकासमयं च रससप्तशक १४७६ समशकम् ।

बुद्धिविलासिनीसमयः सप्ताङ्गशक १४६७ शकस्तत्र प्रत्यध्यायसमाप्तौ चैकैकः श्लोकः ।

यथा परिकर्म्माष्टकसमाप्तौ

ज्योतिर्वित्कुलमण्डनो द्विजपतिः श्रीकेशवोऽजीजन-
द्यं लक्ष्मीश्च समस्तशास्त्रनिपुणं श्रीमद्गणेशाभिधम् ।
अस्यां बुद्धिविलासिनीसमभिधौ लीलावतीव्याकृतौ
तत्कृत्यां परिकर्म्मणां निरगमत् प्रस्पष्टमत्राष्टकम् ॥

बुद्धिविलासिन्यां कमलछुरिकादिबन्धेन निजकाव्यसाहित्यपाटवं बहुत्र प्रकाशितं ग्रन्थकृता ।

यथाऽऽदौ द्वितीयश्लोकेनाष्टदलकमलबन्धरूपेण महादेववर्णनम् ।



शरजाव हरानीश
शनीरासुरधामश
शमधामाव पापाश
शपापाहृद्दिजारश॥

हे हर । अव । रक्ष । अस्मान् । इति शेषः । किं भूत । शरजाव । शराज्जायते शरजः कार्त्तिकेयस्तं अवति रक्षतीति शरजावस्तत्सम्बोधने । शनीर । शनिं शनिपीडामीरयति नाशयति यस्तत्सम्बोधने । अनीश । न ईशो यस्य तत्सम्बोधने । असुरधामश । असुराणां धाम । असुरधाम तत् श्यति नाशयति ( शो तनूकरणे-इति धातोः ) यस्तत्सम्बोधने । शमस्य शान्तेर्धाम गृहं यत् तत्सम्बोधने शमधाम । पापमश्नाति भक्षयति यस्तत्सम्बोधने पापाश । शपन्ति ये ते शपा दुष्टास्तान् न पाति यस्तत्सम्बोधने शपाप । आसमन्ताद्भावेन आहृदिजायत असौ हृदिजः कामस्तं । अरमत्यर्थं श्यति नाशयति यस्तत्सम्बोधने आहृदिजारश ।

एवं परिकर्म्माष्टकसमाप्त्यनन्तरं छुरिकाबन्धेन रामवर्णनम् ।

वि
व त ये
त्वाय
म रा म
द प द
श्र ण ग ज श्र त
य
त्प्र की र्णा घ द ल
म.

चिन्तये तव तत्त्वाय राम रामपदं पदम् ।
यत्प्रकीर्णाघदलमं नन्तव्य जगदाश्रय ॥
नन्तव्य नमनयोग्य शेषं स्पष्टम् ।

ग्रन्थकरणे कारणं बृहत्तिथिचिन्तामणौ लिखितं गणेशदैवज्ञेन तद्यथा

ब्रह्माचार्यवसिष्ठकश्यपमुखैर्यत् खेटकर्म्मोदितं
तत् तत्कालजमेव तथ्यमथ तद्दूरिक्षणेऽभूच्छ्लथम् ।
प्रापाऽतोऽथ मयासुरः कृतयुगान्तेऽर्कात् स्फुटं तोषितात् ।
तच्चास्ति स्म कलौ तु सान्तरमथाऽभूच्चारु पाराशरम् ॥



तज्ज्ञात्वार्यभटः खिलं बहुतिथे कालेऽकरोत् प्रस्फुटम् ।
तत् स्रस्तं किल दुर्गसिंहमिहिराद्यैस्तन्निबद्धं स्फुटम् ॥
तच्चाभूच्छिथिलं तु जिष्णुतनयेनाकारि वेधात् स्फुटम् ।
ब्रह्मोक्त्याश्रितमेतदप्यथ बहौ कालेऽभवत् सान्तरम् ॥
श्रीकेशवः स्फुटतरं कृतवान् हि सौरा-
र्यासन्नमेतदपि षष्टिमिते गतेऽब्दे ।
दृष्ट्वा श्लथं किमपि तत्तनयो गणेशः
स्पष्टं यथा ह्यकृत दृग्गणितैक्यमत्र ॥
कथमपि यदिदं चेद्भूरिकाले श्लथं स्या-
न्मुहुरपि परिलक्ष्येन्दुग्रहाद्यृक्षयोगम् ।
सदमलगुरुतुल्यप्राप्तबुद्धिप्रकाशैः
कथितसदुपपत्त्या शुद्धिकेन्द्रे प्रचाल्ये ॥

वराहमिहिरेण पञ्चसिद्धान्तिकायां पौलिशरोमकवासिष्ठसौरपैतामहसिद्धान्तानां मतं प्रकाशितं तत्रापि सूर्यस्य मतं सर्वेभ्यः श्रेष्ठतममिति स्वीकृतं वेधेन किमपि नूतनं संस्कारान्तरं नाऽऽनीतमेतत्सर्वमज्ञात्वैव गणेशदैवज्ञेन यत्प्रपञ्चितं तदात्मप्रशंसारूपमिति स्फुटमेव निष्पक्षपातिनां तत्त्वग्राहिणां विदुषामग्रे ।

## अनन्तदैवज्ञः । १४४७

अयं श्रीकान्तस्यार्थात् हरेः पुत्रः सप्तवेदवेदचन्द्रमिते १४४७ शके सूर्यसिद्धान्तानुसारिणीं पञ्चाङ्गनिर्म्माणोपयोगिध्रुवाङ्कमण्डितामनन्तसुधारसनाम्नीं सारणीमकार्षीत् । प्राचीनज्योतिर्विद्गृहे काठिन्येनेयं सारणी प्राप्यते । काशिकराजकीयपुस्तकालयेऽपि चरमखण्डितास्या एका प्रतिरस्ति । अस्या आदौ

ढुण्ढिविनायकचरणद्वन्द्वं मुदमादधन् नत्वा ।
सूक्त्यानन्तरसाख्यं तनुते श्रीकान्तजोऽनन्तः ॥

अस्य मूलग्रामादिस्थितिर्नारायणदैवज्ञस्य मुहूर्त्तमार्त्तण्डरचयितुर्वर्णने विलोकनीया । अन्याऽस्यानन्तस्य कृतिरस्माभिर्न दृष्टा । मुहूर्त्तमार्त्तण्डस्थलेखानुसारेणानन्तस्य पिता हरिः । अत्र च श्रीकान्त इति लिखितस्तच्च

छन्दोभङ्गभियाऽन्तरमैत्र्या च हरेर्नामान्तरं श्रीकान्त इति लिखितमनन्तेने-
त्यनुमीयते पितापुत्रयोर्द्वयोः समुचितसमयप्रदर्शनात् ।

### अनन्तदैवज्ञो द्वितीयः । १४५९

अयं विदर्भदेशान्तर्गतधर्म्मपुरनिवासी चिन्तामणिदैवज्ञतनूजो नीलक-
ण्ठरामदैवज्ञयोः पिताऽऽसीत् । नीलकण्ठरामदैवज्ञयोर्लेखानुसारेणाऽस्यैका
कृतिर्जातकपद्धतिरन्या कामधेनुगणितटीकेति कृतिद्वयं ज्ञायते परन्त्वेतत्कृति-
द्वयमस्मद्दृष्टिगोचरीभूतमद्यावधि न जातम् । गोविन्ददैवज्ञेन पीयूषधाराख्य-
मुहूर्त्तचिन्तामणिटीकाकृता मुहूर्त्तचिन्तामणिग्रन्थान्तिमाध्यायाष्टमश्लोकटी-
कायां "उत्तमकामधेनुगणिते उत्तममल्पक्लेशेन ब्रह्मार्यभटपक्षीयपञ्चा-
ङ्गानयनप्रतिपादकं यत्कामधेनुनामकं गणितशास्त्रं तत्र टीकां तद-
भिप्रायविवृतिमकार्षीदि"ति विलिखितम् । अनन्तदैवज्ञतनूजेन नीलक-
ण्ठेन यदा नवखपञ्चेन्दु १५०९ शके नीलकण्ठी रचिता तदाऽनन्तो वर्त्तमान
आसीत् ( नीलकण्ठदैवज्ञवर्णनं विलोक्यम् )। तस्मिन् समये यद्यस्यावस्था
पञ्चाशद्वर्षमिता कल्प्या तदास्य जन्मशकः १४५९ एतन्मितः समायाति
(अत्र रामदैवज्ञवर्णनं च विलोक्यम्)। कामधेन्वर्थं बोपदेवसुतमहादेववर्णनं
विलोक्यम् ।

### विष्णुदैवज्ञः । १४७८

अयं दिवाकरस्य पुत्रः कृष्णदैवज्ञस्यानुजः सौरपक्षीयं करणं खराम-
पञ्चेन्दुशके १५३० कृतवान् । तदुदाहरणं च तद्भ्राता विश्वनाथसंज्ञकः
पञ्चवेदशरभूमिते १५४५ शके समकरोत् ।
एतत् करणमस्मद्दृष्टिगोचरीभूतं न । तदुदाहरणं चास्माभिर्दृष्टं
तदादौ

य: समस्तजननित्यपूजितस्तं प्रणम्य गणनायकं मुदा ।
सौरपक्षगणितं विरच्यते विश्वनाथविबुधेन सन्मतम् ॥

अन्ते च

गोदातीरासन्नगोलग्रामवासी द्विजोत्तमः ।
दिवाकराख्यगणकस्तत्पुत्रेण विनिर्मितम् ॥
गणितं विश्वनाथेन दैवज्ञेन सुखप्रदे ।
विष्णुभ्रातृकृतग्रन्थे सूर्यपक्षसहोदरे ॥



सायकाब्धिशरभूमिते १५४५ शके चैत्रशुक्लगुरुवासरेन्दुभिः ।
षष्ठिसंज्ञकतिथौ हि समाप्तं सूर्यपक्षशरणं करणं तु ॥

विश्वनाथेन बहूनां भास्करीयसिद्धान्तशिरोमण्यादीनामुदाहरणानि
विरचितानि ।

विष्णुकरणोदाहरणे करणादिशकः खरामपञ्चेन्दु १५३० मितो लिखि-
तस्तेन करणारम्भो ज्ञायते ।

( शिवदैवज्ञवंशावली निरीक्ष्याऽत्र ) अत्र करणारम्भसमये यदि विष्णु-
दैवज्ञावस्था द्विचत्वारिंशद्वर्षमिता कल्प्या तर्हि विष्णुदैवज्ञजन्मशकोऽष्टाष्ट-
पुरन्दर १४८८ समः सिध्यति । ज्योत्पत्तौ पूर्वाचार्यैश्चतुर्विंशतिज्यार्धानि
यानि साधितानि तत्र ज्योतिर्न्यायशास्त्रयोः साम्यप्रकल्पनं विष्णुदैवज्ञकल्पनं
चमत्कृतिकरम् । तत्पद्यं च

आचार्यैस्त्रिगुणादमी परगुणाः सर्वेऽपि संसाधिताः
प्राधान्यादिह तर्ककर्कशगिरा प्रायश्चतुर्विंशतिः ।
तत्कुत्रापि निजाकृतिप्रकृतितः सद्वासनाभ्यासतः
सद्बीजाक्षरमालिकाजपवशात् प्रायस्तदत्यद्भुतम् ॥

इदं पद्यं ज्योतिःपक्षेऽन्यपक्षे च घटते । ज्योतिःशास्त्रपक्षे पूर्वाचार्यैस्त्रि-
गुणात् त्रिज्यातः परगुणा अन्यज्याः संसाधिताः । अन्यत्र त्रिगुणात् सत्त्वर-
जस्तमोऽभिधादन्ये गुणा न्याये गौतमादिभिः संसाधिताः । अथैते गुणास्तैः
कथं बुद्धा इत्याह । निजाकृतिप्रकृतितः । आकृतिराकारः प्रकृतिः स्वभावो
वा वर्गप्रकृतिस्ताभ्यामन्यत्र निजाकृतिः पुरुषः प्रकृतिः प्रसिद्धा ताभ्यामित्यर्थः।
अन्यत् स्पष्टम् ।

### सूर्यः । १४६३

भारद्वाजगोत्रोऽयं ज्ञानराजपुत्रः काव्यसाहित्यादिनिपुणस्त्रिरसशक्र
१४६३ मिते शके भास्करीयलीलावतीटीकां गणितामृतकूपिकां व्यरचयत् ।
अत्र श्लोकानामर्थः काव्यसाहित्यवद्बहुधा कृतोऽस्ति । परन्तु व्यक्तरीत्यैव
सूत्राणामुपपत्तयोऽत्र यास्ता न चतुरचमत्कारकारिण्यः । गोदोत्तरतटवर्त्ति-
पार्थाभिधानपुरमस्य मूलपुरुषाणां स्थितिः । बहुभिरयं सूर्यदासश्च कथ्यते ।
एनेन भास्करीयलीलावतीबीजयोष्टीके, श्रीपतिपद्धतेर्गणितम् , बीजगणि-
तम् , एकं ताजिकम् , अच्युतार्थबोधकंकाव्यद्वयम् , वेदान्ते बोधसुधाक-

लीलावतीटीकान्तश्लोकेन ज्ञायते । राण्यो ग्रन्थोऽपि विरचित इति सर्वं लीलावतीटीकान्तश्लोकेन ज्ञायते । लीलावतीबीजयोष्टीके हित्वाऽन्याः कृतयोऽस्यास्मदृदृष्टिगता नाद्यावधि । एतत्कृता लीलावतीटीकाऽतिशुद्धा मन्निकटे, बीजगणितटीका चातिशुद्धा काशिकराजकीयपुस्तकालये वर्त्तते । प्रथमं सूर्येण बीजगणितटीका विनिर्मिता पश्चाल्लीलावतीटीका । एतट्टीकानिर्माणकाले सूर्यस्य वयश्चत्वारिंशद्वर्षसमं यदि कल्प्यते तदाऽस्य जन्मशकोऽग्नियुग्मशक्र १४२३ समः सिध्यति । अस्य सौजन्यं काव्यचातुर्यं कल्पनावैभवं वंशादिवर्णनं च टीकाद्यन्तश्लोकैः स्फुटम् ।

लीलावतीटीकादिकादि ३-४ श्लोकौ

अव्यक्तं गणितं सवासनतया व्याख्याय लीलावतीं
व्याख्यातुं विहितादरोऽस्म्यहमथ व्यक्तोपपत्तिक्रमैः ।
श्रीमत्सुज्ञविधिज्ञपण्डितवरज्ञानाधिराजात्मजः
स्वप्रज्ञापरिणामतः सुगणकः सूर्याभिधानः कविः ॥

निर्मथ्य बीजगणितार्णवमात्मयत्नात्सद्वासनामृतमवाप्तमिदं मया यत् ।
सत्संग्रहाय गणितार्णवकूपिकेयं टीका विरच्यत इहावनिदेवतुष्ट्यै ॥

अन्ते

आस्ते त्रस्तसमस्तदोषनिचयं गोदाविदर्भायुतेः
क्रोशेनोत्तरतस्तदुत्तरतटे पार्थाभिधानं पुरम् ।
तत्राभूद्गणकोत्तमः पृथुयशा श्रीनागनाथाभिधो
भारद्वाजकुले सदैव परमाचारो द्विजन्माग्रणीः ॥

पुत्रस्तस्य कलाकलापकुशलः क्ष्मापालमालार्चितः
सौजन्यैकसुधाकरः क्षितितले सौभाग्यभाग्यास्पदम् ।
कीर्तिर्यस्य दिगन्तरेषु विविधैर्व्याख्यानसंख्यागमै-
र्विख्याता ननु सद्रवा विजयते श्रीज्ञानराजाभिधः ॥

तत्सूनुर्गणितार्णवप्रतरणेः सत्कर्णधारः सुधीः
छन्दोऽलङ्कृतिगीतशास्त्रनिपुणो वैदग्ध्यपारं गतः ।
सूर्यो दैवविदां मुदे रचितवान् व्यक्तस्य टीकामिमा-
माचार्याः सदसद्विचारचतुराः पश्यन्तु तुष्यन्तु च ॥



दुर्ज्ञेया गणितोपपत्तिरथ च ज्ञाताऽपि नो शक्यते
वक्तुं सूक्ष्मतरप्रमेयगहना यस्मादतः कुत्रचित् ।
गूढार्था प्रमिताक्षरापि कुहचित्तच्छोधजातश्रमाः
क्षन्तव्यः सुजनास्तदुक्तिजनितः स्वल्पोऽपराधो मम ॥

आस्वादितापि विबुधैरुपयाति वृद्धिंव्यक्तादिपक्षयुगलेऽपि तनोति शोभाम्
पूर्णा कलाभिरत एव सुधांशुमूर्त्तेराधिक्यमेति गणितामृतकूपिकेयम् ॥
परोपकारार्थमुदाहृतेन मद्वाग्विलासेन रसोद्गतेन ।
शब्दाभिधं ब्रह्म यतः प्रवृत्तं स प्रीयतां यादवराजसिंहः ॥

सदला त्रिसहस्री ३५०० स्यादनुष्टुभां ग्रन्थसंमितः शाके ।
त्रिरसपुरन्दर १४६३ गणिते गणितामृतकूपिका रचिता ॥
व्याख्ये वासनयाऽन्विते गणितयोर्लीलावतीबीजयो-
स्तद्वच्छ्रीपतिपद्धतेश्च गणितं बीजं तथैकं व्यधात् ।
एकं ताजिकमच्युतार्थमपरं काव्यद्वयं प्रौढधीः
सूर्यो बोधसुधाकराख्यमकरोदध्यात्मशास्त्रेऽष्टमम् ॥

इति श्रीमत्सकलानवद्यविद्याविद्योतमानमानसगणितोपनिषद्रहस्याभिज्ञदैवज्ञपण्डितज्ञानराजतनयपण्डितसूर्यदासविरचितायां गणितामृतकूपिकायां भास्करीयलीलावतीटीका सम्पूर्णा ।

एतत्काव्यं च यथा "बाले मरालकुलमूलदलानि सप्ते" त्यादि टीकायाम् ।

'पुरःपारसरसमीरनिःसृतसीकरनिकरसंस्कृतबिसलतावतंसहंसहंसीनिवहगतिविलासमवलोक्य विपुलजलं कल्लोलविलोलकलेवरं कलितकोमलकमलं विमलनालं कुरलकूजितकेलिकलहकोलाहलशीलं मरालयुगलमद्राक्षीदित्यर्थः" इत्येवमेतत्कृता टीका काव्यरसामृतभरा सदुपपत्त्यनुपेता प्राचीनज्योतिर्विदां गेहे शोभते ।

## दुण्ढिराजः । १४६३

गोदातीरवर्त्तिपार्थपुरनिवासिनृसिंहदैवज्ञस्य तनयः सूर्यदासजनकस्य ज्ञानराजस्य शिष्यः जन्मपत्रिकानिर्माणार्थं क्रमपूर्वकं जातकाभरणनाम जातकमकरोत् । सम्प्रति बहुधा फलवेदिनो ज्योतिर्विद एतद्ग्रन्थक्रमानुसारेण जन्मपत्रिकां रचयन्ति । अयं ग्रन्थश्च सर्वत्रैव लिखितो मुद्रितश्चोपल-

नाभिहितो ग्रन्थकृता तथापि ज्ञान-
भ्यते । अत्र यद्यपि ग्रन्थरचना कालो राजस्य शिष्यत्वादस्य समयो ज्ञानराजपुत्रसूर्यपण्डितकृतलीलावतीटीका-राजस्य शिष्यत्वादस्य समयो ज्ञानराजपुत्रसूर्यपण्डितकृतलीलावतीटीका-
गणितामृतकूपिकासमयासन्नो रामरसशक्र १४६३ शकोऽनुमीयते । ग्रन्थ-
विलोकनेन फलितेऽस्य पाटवं सम्यग् विभाति । वस्तुतोऽस्य ग्रन्थेन ज्योति-
र्विदां महानुपकारो भवति । ग्रन्थसंख्या च श्लोकसहस्रद्वयासन्ना ।

अस्यादौ २ श्लोकः

ज्ञानराजगुरुपादपङ्कजं मानसे खलु विचिन्त्य भक्तितः ।
जातकाभरणनाम जातकं जातकज्ञसुखदं विधीयते ॥

तदन्ते च

गोदावरीतीरविराजमानं पार्थाभिधानं पुटभेदनं यत् ।
सद्गोलविद्यामलकीर्त्तिभाजां मत्पूर्वजानां वसतेः स्थलं तत् ॥
तत्रत्यदैवज्ञनृसिंहसूनुर्गजाननाऽऽराधनताभिमानः ।
श्रीढुण्ढिराजो रचयांबभूव होरागमेऽनुक्रममादरेण ॥

( सूर्यदासवर्णनं विलोक्यम् )

## नीलकण्ठदैवज्ञः । १४७९

अयमनन्तदैवज्ञेन पद्माख्ययाऽम्बया गर्गगोत्रे समुद्भूतः पारसीकारबीकशब्दमिश्रितां वर्षफलनिरूपिणीं ताजकमतीयां खण्डत्रयेण तन्त्रत्रयरूपेयं नीलकण्ठी राजति । मुद्रिता चोपलभ्यते सर्वत्रैव । नवखपञ्चचन्द्रमिते १५०९ शके नीलकण्ठेन रचितेयं तेनेयं नीलकण्ठी कथ्यते । रचनाकाले नीलकण्ठस्य वयो यदि त्रिंशद्वर्षमितं कल्प्यते तदाऽस्य जन्मशको नवसप्तवेदचन्द्रमितः १४७९ समायाति । अत्र रसालादिटीका अनेकाः सन्ति । विश्वनाथदैवज्ञस्योदाहरणं चात्र । वर्षकुण्डलीनिर्माणार्थं पञ्चाङ्गस्थग्रहेभ्यः सुलभेन चालनेनेष्टदिनग्रहानयनाय तत फलादिज्ञानार्थं फलवेदिनां जीवनरूपेयं संप्रति भारतवर्षे शोभते ।

चिना नीलकण्ठीसमाख्यां कृतिमकार्षीत् । ग्रन्थविलोकनेनास्य पाटवं गणिते विभाति परन्तु तत्र काचित्कृतिर्नास्ति । फलमात्रैकजीविनां ज्योतिर्विदां गृहे गृहे

अत्रेकबाल—इन्दुवार—इत्थशाल—इशराफ—नक्त—यमया—मणऊ—कबूल-गैरकबूल-खल्लाशर—रद्द—दुफाली-कुत्थ— दुत्थोत्थदबीर—तुम्बी—



रकुत्थ—दुरुफेति षोडशयोगेभ्यः पारसीकारबीकमतीयेभ्य एकस्मिन् वर्षे प्राणिनां शुभाशुभज्ञानार्थं विधयो विलिखिताः सन्ति । नीलकण्ठेनैका जातकपद्धतिश्च विरचिता सा च मिथिलाप्रान्तेषु प्रसिद्धा षष्टिश्लोकात्मिका ।

नीलकण्ठ्याः समाप्तौ

आसीदसीमगुणमण्डितपण्डिताग्र्यो
व्याख्यद्धुजङ्गपगवीः श्रुतिवित्सुवृत्तः ।
साहित्यरीतिनिपुणो गणितागमज्ञ-
श्चिन्तामणिर्विपुलगर्ग्गकुलावतंसः ॥ १ ॥

तदात्मजोऽनन्तगुणोऽस्त्यनन्तो योऽधोक् सदुक्तीः किल कामधेनुम् ।
सत्तुष्टये जातकपद्धतिं च न्यरूपयद्दुष्टमतं निरस्य ॥ २ ॥

पद्माऽम्बयाऽसावि ततो विपश्चित् श्रीनीलकण्ठः श्रुतिशास्त्रनिष्ठः ।
विद्वच्छिवप्रीतिकरं व्यधासीत् समाविवेकं मृगयावतंसम् ॥ ३ ॥

शाके नन्दाभ्रबाणेन्दु १५०९ मित आश्विनमासके ।
शुक्लेऽष्टम्यां समातन्त्रं नीलकण्ठबुधोऽकरोत् ॥ ४ ॥

द्वितीयश्लोके 'ऽस्त्यु' पादानात् नीलकण्ठीरचनाकालेऽनन्तो नीलकण्ठपिता वर्त्तमान आसीदित्यनुमीयते । तथा तृतीयश्लोके शिवपण्डितप्रीत्यर्थं ग्रन्थकरणं यल्लिखितं तत्र शिवनामा नृसिंहदैवज्ञसहोदरात् शिवदैवज्ञात् कश्चिदन्यो गणको ज्ञेयो द्वयोः कालयोर्भिन्नत्वात् ।

अयं नीलकण्ठोऽकबरमहीमहेन्द्रसभाप्रधानपण्डित आसीत् ॥

( अस्य पुत्रस्य गोविन्ददैवज्ञस्य वर्णनं विलोक्यम् )

## कृष्णदैवज्ञः । १४८७

अस्य पिता बल्लालनामा माता च गोजिनाम्नी गुरुर्दिवाकरपुत्रः कृष्णानुजो गणेशदैवज्ञानुजतनुजनृसिंहदैवज्ञशिष्यो विष्णुनामा । यवननृपतीन्द्रजहांगीरभारतेन्द्रस्य प्रधानपण्डितोऽयमासीदित्येतदनुजेन मुनीश्वरपित्रा रङ्गनाथेनालेखि । ( रङ्गनाथवर्णनं विलोक्यम ) एनेन भास्करीयबीजगणितटीका बहुविशेषसहिता नवाङ्कुराख्या विरचिता । 'मया भास्करीयलीलावतीबीजगणितगोला व्याख्येयाः'' इति कृतसङ्कल्पेन व्याख्यातलीला-

वतीगणितगोलेन दुर्निवारभयङ्करकालवशीभूतेन गणेशदैवज्ञेन स्वनिधनसमये
'नृसिंह त्वया भास्करीयबीजं व्याख्याय मत्सङ्कल्पः पूरणीयः" इति
स्वभ्रातुष्पुत्राय नृसिंहायाज्ञा दत्ता । सोऽप्यव्याख्यातबीजः कालवशीभूतो
बीजव्याख्यानाय स्वशिष्यं विष्णुमादिदेश । विष्णुरपि कालवेदनाऽसहिष्णु-
स्तदर्थं स्वशिष्यं कृष्णमाज्ञापितवान् । समवाप्य चेमां गुरोराज्ञां कृष्णदैवज्ञेन
विरचितेयं टीका नवाङ्कुरेति जनश्रुतिः प्राचीनज्योतिर्विद्वदनात् श्रूयते ।

अस्यां टीकायां कृष्णदैवज्ञेन बहुत्र नवीना कल्पना स्वबुद्धया करणया-
दिमूलसाधनादौ विलिखिता । वस्तुतः प्राचीनटीकासु कृष्णदैवज्ञकृतेयं टीकैव
संप्रति ज्योतिर्विद्भिरादृता भारतवर्षे प्रधानज्योतिर्विदां गेहे शोभते । अस्या
एकाप्रतिर्मन्निकटेऽतीव शुद्धा वर्त्तते । टीकारम्भे अन्ते च यद्यपि निजवंशपर-
म्परा विस्तरतो वर्णिता कृष्णेन तथापि समयो न लिखितः । परन्तु अस्मा-
त्तृतीयो रङ्गनाथस्तथाऽयं विष्णुदैवज्ञशिष्यश्चेत्यनेन ज्ञाताभ्यां विष्णुरङ्गना-
थसमयाभ्यामस्य जन्मसमयोऽनुमानतः सप्ताष्टशक्रमित १४८७ शकः कल्प्य-
ते । सूर्यसिद्धान्तटिप्पणगूढप्रकाशाख्ये रङ्गनाथलेखानुसारेण श्रीपतिपद्धति-
टीकापि वर्त्तत एतत्कृता । काशिकराजकीयपुस्तकालये ग्रहणे छादकनिर्ण-
यश्च दम्पतिसंलापरूप एतत्कृतोऽस्त्यऽधुना यश्च मया संशोध्य मुद्रितोऽपि ।
एवं बीजाङ्कुरा, श्रीपतिपद्धतिटीका, छादकनिर्णयः, इति कृतित्रयमस्या-
वगम्यते तत्र श्रीपतिपद्धतिटीका नास्मद्दृष्टिगोचरीभूताद्यावधि । वस्तुतः
कृष्णदैवज्ञस्य पाण्डित्यं सत्पण्डितरञ्जनं गणितकलापूरितमस्ति ।

"षडष्टशतकाः क्रीत्वे"त्याद्युदाहरणे बीजाङ्कुरायां "उद्दिष्टः कुट्टके तज्ज्ञै-
र्ज्ञेयो निरपवर्त्तनः" इति भास्करोक्तगोलाध्यायस्थवचनाभिप्रायमज्ञात्वैव
सर्वं कृष्णदैवज्ञेन यदुक्तं तद्बुद्धिमद्भिर्निपुणं विलोक्यम् । अत्र भावनोपप-
त्तिरतिगुरुतरा तदर्थं कमलाकरेण सिद्धान्ततत्त्वविवेके लाघवेन प्रदर्शिता ।

बीजाङ्कुरारम्भे ६-१० श्लोकाः

आसीदसीमगुणरत्ननिधानकुम्भः कुम्भोद्भवाभरणदिग्ललनाललामः ।
आशैशवार्जितविशेषकलानुवर्त्ती श्रीकेशवः सुगणितागमचक्रवर्त्ती ॥
तस्मादभूद्भुवनभूषणभूतमूर्त्तिः श्रीमानगण्यगुणगौरवगेयकीर्त्तिः ।



ज्योतिर्विदागमगुरुर्गुरुसंप्रदायप्रज्ञातशास्त्रहृदयः सदयो गणेशः ॥
भ्रातुः सुतस्तस्य यथार्थनामा नृसिंह इत्यद्भुतरूपशोभः ।
अवर्द्धयद्यो जगतामभीष्टं प्रह्लादमाश्चर्यकरं सुराणाम् ॥
तच्छिष्यो विष्णुनामा स जयति जगतीजागरूकप्रतिष्ठः
शिष्टानामग्रगण्यः सुभणितगणिताम्नायविद्याशरण्यः ।
यद्वक्त्रोन्मुक्तमुक्ताफलविमलवचोवीचिमालागलन्तो
द्वित्राः सिद्धान्तलेशा जगति विदधतेऽज्ञोऽपि सर्वज्ञगर्वम् ॥
तस्मादधीत्य विधिवत् त्रिस्कन्धं ज्यौतिषं गुरोः ।
कृष्णो दैवविदां श्रेष्ठस्तनुते बीजपल्लवम् ॥

अन्ते

अभूत् पृथिव्यां प्रथितो गुणौघैश्चिन्तामणिर्दैवविदां वरिष्ठः ।
संपूजनानेहसि यस्य गौरी स्मृता स्तुता प्रत्यहमाविरासीत् ॥
तत्सूनवः पञ्च बभूवुरेषां ज्येष्ठोऽभिरामः किल रामनामा ।
भविष्यदर्थज्ञतया हि यस्य विदर्भराजोऽपि निदेशवर्त्ती ॥
रामादभूतां सीतायां पुत्रौ कुशलवाविव ।
त्रिमल्लो गोपिराजश्च गुणैः सर्वैः समन्वितौ ॥
त्रिमल्लसूनुर्जयति द्विजेन्द्रो बल्लालसंज्ञः शितिकण्ठभक्तः ।
यः सन्ततं रुद्रजपातिसङ्गाद्ब्राह्मयं महोमूर्त्तमिवावभाति ॥
दैवज्ञवर्यगणसन्ततसेव्यपार्श्वबल्लालसंज्ञगणकस्य सुतोऽस्ति कृष्णः ।
रामानुजः स परमेश्वरतुष्टिहेतोर्बीजक्रियाविवृतिकल्पलतामकार्षीत् ॥
यद्भास्करेण निजधामगुणातिरेकात्सम्पादितं सगुणवर्गघनं हि बीजम् ।
तत्कृष्णभूमिमधिगम्य विचारवारिसंसिक्तमङ्कुरजनुष्यभवत्समर्थम् ॥

यैर्यैः श्रमैर्विरचितोऽस्ति नवाङ्कुरोऽसौ
तेषामभिज्ञ इह कः परमात्मनोऽन्यः ।
इत्थं विचिन्त्य जगदीश तवैव तुष्ट्यै
सर्वज्ञ ते चरणयोर्निहितस्ततोऽयम् ॥

## रघुनाथशर्म्मा। १४८७

अयं सोमभट्टात्मजः सप्तगजवेदभूमिते १४८७ शके भास्कराचार्यादिप्रणीतग्रन्थानुसारेण सूर्यमतेनापि मणिप्रदीपनामकं करणं समकरोत्। अस्यैकं पुस्तकं लिखितं प्राचीनं प्रायः शुद्धं त्रिप्रश्नाधिकारान्तं मन्निकटे वर्त्तते। आदावहर्गणानयनप्रकारतः करणारम्भसमयः १४८७ शको ज्ञायते। इदं खण्डितं लघु पुस्तकं श्लोकशतद्वयासन्नं रघुनाथेन करणकुतूहलादिकरणमार्गानुसारमेवालेखि न कश्चिदत्र विशेषः प्रतिभाति। अत्र प्रत्यध्यायसमाप्तौ "इति सोमभट्टात्मजरघुनाथभट्टविरचिते मणिप्रदीपे" इति लेखानुसारेणायं सोमभट्टसुत इति ज्ञायते।

ग्रन्थादौ

यदलसचलितैः कृपाकटाक्षैर्द्रुहिणदिनेशवसिष्ठलोमशाद्याः।
ग्रहगणितमहाब्धिपारमीयुस्तदहमुमार्द्धवपुर्महः श्रयामि॥

आलोक्य भास्करकृतानखिलप्रबन्धान्।
पूर्वैः कृतानपि च सूर्यमतेन खेटान्
वक्ष्ये ततः स्फुटतरान् रघुनाथशर्म्मा
संक्षेपतो ग्रहविदां श्रमनोदनाय॥

## रामदैवज्ञः। १४८७

अयमनन्तदैवज्ञसुतो नीलकण्ठानुजः काश्यां युग्मयुग्मशरधरामिते १५२२ शके मुहूर्तचिन्तामणिनामकं मुहूर्त्तग्रन्थं व्यरचयत्। सम्प्रति भारतवर्षे सर्वत्रैवास्य ग्रन्थस्य महती प्रसिद्धिः। एतदनुसारेणैव फलवेदिनो यात्राविवाहोत्सवादिमुहूर्त्तान् विचारयन्ति।

मुहूर्त्तचिन्तामणिः श्रीपतिरचितरत्नमालाप्रतिबिम्बरूप एव। अत्र पद्यानां विलोकनेन ग्रन्थकृतः काव्यकोशव्याकरणज्यौतिषेषु कौशलं स्फुटमेव।

अस्यान्ते

आसीद्धर्मपुरे षडङ्गनिगमाध्येतृद्विजैर्मण्डिते
ज्योतिर्वित्तिलकः फणीन्द्ररचिते भाष्ये कृतातिश्रमः।
तत्तज्जातकसंहितागणितकृन्मान्यो महाभूभुजां
तर्कालङ्कृतिवेदवाक्यविलसद्बुद्धिः स चिन्तामणिः॥



ज्योतिर्विद्गणवन्दिताङ्घ्रिकमलस्तत्सूनुरासीत् कृती
नाम्नाऽनन्त इति प्रथामधिगतो भूमण्डलाहस्करः।
यो रम्यां जनिपद्धतिं समकरोद्दुष्टाशयध्वंसिनीं
टीकां चोत्तमकामधेनुगणितेऽकार्षीत् सतां प्रीतये॥
तदात्मज उदारधीर्विबुधनीलकण्ठानुजो
गणेशपदपङ्कजं हृदि निधाय रामाभिधः।
गिरीशनगरे वरे भुजभुजेषुचन्द्रै १५२२ र्मिते
शके विनिरमादिमं खलु मुहूर्त्तचिन्तामणिम्॥

रामदैवज्ञोऽयं पृथ्वीपति-अकब्बरनरेन्द्रराज्यप्राप्तिसमयात् सप्तसप्तवेदधराशक १४७७ समात् पञ्चाङ्गादिनिर्म्माणाय अकब्बरनृपतिकृपापात्रजयपुराधिपतिरामनृपतितुष्ट्यै तदीयाज्ञानुसारेण सप्तदशश्लोकैस्तिथ्याद्यानयनोपयोगिसारणीसहितं भुजचन्द्रवाणमहीसमशके १५१२ रामविनोदाख्यं करणमकरोत्। सारणीसहितमिदं करणं काशिकराजकीयपुस्तकालये स्थापनार्थं श्रीथिबोसाहिबमहाशयानुमत्या मत्क्रीतमस्ति पुस्तकालये। जयपुरादिप्रान्तेऽस्य करणस्य विशेषतः प्रचारोऽद्यावधि वरीवर्त्ति तत्रैतदनुसारेण पञ्चाङ्गं च रचयन्ति गणकाः। एवमस्य गणिते रामविनोदाख्यमिदं तन्त्रमुपलभ्यते। नृसिंहदैवज्ञोक्तानुसारेण सिद्धान्तोपयोगियन्त्ररचनाप्रकारमण्डितं यन्त्रप्रकाशनामकं तन्त्रं च रामकृतमिति ज्ञायते परन्तु तत्तन्त्रमस्मद्दृष्टिगोचरागतं नाद्यावधि। रामनृसिंहदैवज्ञयोः समयविलोकनेन मुहूर्त्तकृतोऽस्यैव रामस्य कृतिः सा यन्त्रप्रकाशाभिधेत्यनुमीयते (नृसिंहदैवज्ञवर्णनं विलोक्यम्)। अयं मीमांसाशास्त्ररसिकश्चासीत् कोलब्रूकसाहिबक्रीतस्य इण्डिया-आफिस्नाम्नि स्थाने स्थापितस्यैतल्लिखितस्य तन्त्रवार्त्तिकाख्यस्य मीमांसापुस्तकस्य दर्शनात्।

रामविनोदादौ

गणपतिमभिवन्द्य श्रीशपदारविन्द-
स्मरणविदिततत्त्वोऽनन्तजो रामचन्द्रः।
अकबरनृपशाकाद्वक्ति पञ्चाङ्गपत्रं
ग्रहगतिसमवेतं रामभूपालतुष्ट्यै॥

शके विक्रमस्य किल शालिवाहनः ।
बाणरामविधु १३५ हीनिते शके विक्रमस्य किल शालिवाहनः ।
शैलशैलमनुभि १४७७ विवर्जितेऽस्मिन्नकब्बरशकाद्गताः समाः ॥
शाहाकब्बरराज्यतो गतसमाः पञ्चाग्निहीना इत्यादि ।

अन्ते
रामेण यत्नादिह रामदासप्रीत्यै कृते रामविनोदनाम्नि ।
जलालदीन्द्राकबरस्य शाकात्पञ्चाङ्गसिद्धिः परिपूर्त्तिमागात् ॥

अस्मिन् रामविनोदेऽपि दिवाकरतनूजेन कृष्णानुजेन विश्वनाथाभिधेन नागवेदशरभू १५४८ मिते शके ह्युदाहरणं चक्रे ।

तस्य रामविनोदोदाहरणस्यादौ च
रामो रामविनोदनामकमृजुं यं ग्रन्थमाबद्धवान्
तस्योदाहरणं परोपकृतये दैवाकरिर्दैववित् ।
ख्यातः प्रख्यगुणः करोति कुतुकात्तद्विश्वनाथः कृती
यद्राजन्यसभासु धन्यमनसां चेतः समारोहति ॥

टोडरमल्लप्रीत्यर्थं संहितारूपं टोडरानन्दनामकं ग्रन्थं च व्यरचयद्राम इत्यपि प्रसिद्धिरस्ति । टोडरानन्दश्च प्राचीनज्योतिर्विदां गेहे काठिन्येन पूर्णः प्राप्यते ।

## गोविन्ददैवज्ञः । १४९१

अयं चन्द्राङ्कशक्र १४९१ मिते शके आश्विनशुक्लसप्तम्यां रविवासरे पुनर्वसुनक्षत्रे नीलकण्ठभार्यायाश्चन्द्रिकाख्यायाः कुक्षौ प्रादुरभूत् । अयं व्याकरणे कुशलो ज्यौतिषे पटिष्ठः काव्यसाहित्यादिनिपुणो बहुविशेषगर्भितां प्राचीनाचार्यवचनमण्डितां स्वपितृव्यरामदैवज्ञकृतमुहूर्त्तचिन्तामणिटीकां पीयूषधाराख्यां तत्त्वतिथ्युन्मिते १५२५ शके वाराणस्यां व्यधात् । यद्यपीयं टीका मुहूर्त्तप्रपञ्चोपयोगिभिः प्राचीनवचनैर्ग्रन्थकृतो बहुविज्ञत्वं सूचयति तथापि सङ्क्रान्तिप्रकरणस्थनवमश्लोकटीकाऽस्य ज्यौतिषसिद्धान्ताऽनभिज्ञत्वं सूचयति तद्यथा

"यात्रादिमुहूर्त्तेषु भरणीव्यतिपातादिदुष्टयोगानां गुरुपुष्यादि-शुभयोगानां च व्यवहारो निरयणेनैवोपपद्यते न सायनेन सायनगणनया सर्वथा ग्रहणसंवादः। तद्यथा षोडशोत्तरपञ्चदशशत १५१६ मिते शालिवाहनशककाले वैशाखशुक्लपूर्णिमायां पञ्चत्रिंशन्नाडीमितायामि-



न्दूपराग उपलब्धः । तत्र चन्द्रः=६।२६।२८, राहुः=१३।५८ अत्र निरयणगणनया शराङ्गुलानि १२, मानैक्यखण्डं २०, ग्रासाङ्गुलानि ८ यद्यत्रायनांशांश्चन्द्रे योजयित्वा शर आनीयते तदा शराङ्गुलानि ३० अस्य मानैक्यखण्डाधिक्याद्ग्रहणं नायातीति सर्वजनप्रत्यक्षविसंवादः" इति ।

सायनगणनायां राहुरपि सायनः क्रियत इति सर्वमज्ञात्वैव गोविन्देन यत्सर्वं प्रलपितं तत्तस्यैव शोभते सायनराहुणा च तान्येव शराङ्गुलान्यायान्ति यानि निरयणेनोत्पद्यन्ते ।

पीयूषधाराया मङ्गलानन्तरमादौ
लसल्लक्ष्मीलीलावसतिरनिशं वेदविहित-
स्फुरद्धर्म्माधारः श्रितसुखपयोदः प्रतिदिनम् ।
अतीव प्रख्यातः स जयति गुणानां जननभू-
र्विदर्भाख्यो देशो हरिरिव सदानन्दजनकः ॥

तस्मिन् विदर्भविषये विषये वितृष्ण-
श्चिन्तामणिर्द्युमणिरेव बभूव मूर्त्तः ।
जाग्रच्चतुर्मुखचतुर्मुखशायिविद्या-
माद्यां प्रवर्त्तयितुमत्र पवित्रकीर्त्तिः ॥

वादैर्विजित्य धरणीतलमासमुद्र-
मुन्निद्रतर्कशतकर्कशबुद्धिसिद्धैः ।
चत्वार ऊर्ज्जितसमर्ज्जितकीर्त्तिदम्भ-
स्तम्भा दिशासु रचिताः सकलासु येन ॥

ज्योतिर्विदुज्ज्वलयशोहरणाय किं वा
चन्द्रांशुनिर्मलकलाभरणाय किं वा
विद्यासरोरुहदृशः शरणाय किं वा
श्रीमाननन्त इति तत्तनयोऽजनिष्ट ॥

तस्मात्पद्माख्यपत्न्यामतिविमलमती वाक्पती दिक्पतीना-
माशाः कासारजाभस्फुरदधिकयशोरश्मिभिर्व्याप्य भान्तौ ।
प्राभूतां तौ तनूजौ श्रुतिगणगदिताचारधारापवित्रौ
ज्येष्ठः श्रीनीलकण्ठस्तदनुगुणगणाऽलङ्कृतो रामनामा ॥

कर्कशस्तर्कशास्त्रे
सीमा मीमांसकानां कृतसुकृतचयः फणिपतिभणितिव्याकृतौ शेषनागः ।
ज्योतिःशास्त्रे च गर्गः स्फुरदतुलसभामण्डनं पण्डितेन्द्रः
पृथ्वीशाकब्बरस्य समजनि जगतीमण्डले नीलकण्ठः ॥
साक्षाच्छ्रीनीलकण्ठः

रामो हेरम्बभक्तेरधिगतविशदानेकविद्योऽनवद्यो
बुद्धिप्रद्योतमानो गणितगुणवतां मानवानां सुखाय ।
ग्रन्थैर्नानाप्रकारैरतिकठिनतरग्रन्थनक्रे विशाले
ज्योतिःशास्त्रार्णवे द्रागदृढतरमतुलं सेतुबन्धं चकार ॥

श्रुतिस्मृतिप्रोक्तसमस्तकर्म्मोपयुक्तमानं दितशिष्टलोकम् ।
मुहूर्त्तचिन्तामणिनामकं स ग्रन्थं व्यधाच्छ्वर्वपुरे स्वपद्यैः ॥

श्रीनीलकण्ठस्य बभूव पत्नी सा चन्द्रिकाख्याभयवंशभूषा ।
नारायणस्येव समुद्रकन्या शर्वस्य गौरीव विराजते या ॥

तस्माद्दैवविदग्रयगण्यतिलकाच्छ्रीनीलकण्ठात् तया
गोविन्दाख्यसुतोऽजनि स्वगुरुतः संप्राप्तविद्यागणः ।
यः शास्त्रामृतसिंधुबंधुरवचोवीचीषु नित्योदितां
सानन्दं समवाप्य भूरि कृतवान् ग्रन्थे श्रमं ज्योतिषे ॥

अनेकबुधमण्डलीविरचितां हि टीकाकृतौ
निधाय हृदयेऽर्थनामिह मुहूर्त्तचिन्तामणेः ।
निगूढतरतद्गतप्रचुरभावमात्मोक्तिभि-
र्बुधा विवरणे करामलकमाशु कर्त्तुं यते ॥

मुहूर्त्तचिन्तामणिदुग्धसिन्धुमामथ्य युक्तिव्रजमन्दरेण ।
गोविन्दसंज्ञस्तनुते सुखाय पीयूषधारां भुवि भुसुराणाम् ॥

अन्ते

श्रीमद्भूपतिशालिवाहनशके चन्द्राङ्कशक्रैर्मिते
मासीषेऽपरपक्षगे नगतिथौ तिग्मांशुवारेऽदितौ ।
धर्म्मज्यौतिषशास्त्रपाणिनिमहाशास्त्रादिपारङ्गमात्
संभूतः खलु नीलकण्ठविदुषो गोविन्दनामा सुतः ॥

शाके तत्त्वतिथीमिते १५२५ युगगुणाब्दो ३४ नीलकण्ठात्मभू-
र्दुग्धाब्धि निखिलार्थयुक्तममलं मौहूर्त्तचिन्तामणिम् ।



काश्यां वाक्यविचारमन्दरनगेनाऽमथ्य लेखप्रियां
गोविन्दो विधिविद्वरोऽतिविमलां पीयूषधारां व्यधात् ॥

इयं टीका लिखिता च प्रायः सर्वत्रैवोपलभ्यते । गोविन्दस्यान्या कृति-रस्मद्दृष्टिगोचरीभूता नाभूदिति ॥

## मल्लारिः । १४९३

अयं दिवाकरनन्दनः कृष्णविष्णुभ्यां लघुस्तद्भ्राता पितुरधीतविद्यो नृसिंहदैवज्ञगुरुगणेशदैवज्ञकृतग्रहलाघवकरणस्योपरि सदर्थामुपपत्तिसहितां टीकामकार्षीत् । अस्यां यद्यपि स्वसमयो न लिखितस्तथापि नृसिंहसमय-तोऽस्य समयो निर्णेतुं शक्यते । नृसिंहस्य जन्मशकः अष्टखपञ्चेन्दु १५०८ समः । अयं च कृष्णदैवज्ञस्य ज्येष्ठपुत्रः । तदुत्पत्तिसमये कृष्णस्य वयः पञ्चविंशतिमितं कल्प्यते तदा कृष्णस्य जन्मशकस्त्रिनागपुरन्दर १४८३ मितः । पञ्चवर्षैर्लघुस्तदनुजो यदि विष्णुः स्यात्तदा विष्णुजन्मशकोऽष्टाष्टपुर-न्दरसमः १४८८ । एवमस्मादपि पञ्चवर्षैर्लघुस्तदनुजो मल्लारिश्चेत्कल्प्यते तदा मल्लारिजन्मशकोऽग्निनवपुरन्दर १४९३ मितः सिध्यति । अनया कल्पनया नृसिंहजन्मसमये मल्लारिवयः पञ्चदशवर्षसमं समायाति तेन नृसिं-हस्य गुरुर्मल्लारिरपीति समुचित एव ।

मल्लारिकृता ग्रहलाघवटीकाऽस्य गोले गणिते काव्ये च सम्यक् पाटवं प्रकटयति । इयं लिखिता मुद्रिता च प्रायः सर्वत्रैवोपलभ्यते । ज्याखण्डैर्विना श्रीपतिज्यानयनमज्ञात्वैवात्र ग्रहलाघवप्रकाराणामुपपत्तयस्तथाऽऽसन्नमूलान-यनमन्तरा केवलानुपातेन पलकर्णाद्यानयनोपपत्तयश्च न प्रौढगणकानन्दका-रिण्यस्तथापीयं टीका भारतवर्षे सर्वैर्ज्योतिर्विद्भिरादृताऽन्यटीकाशिरोमणि-रूपा सर्वत्र राजति ।

वक्रकेन्द्रांशानयनेऽत्र समीकरणकल्पना मल्लारिकृताऽतीवसुन्दरी पूर्व-चार्योक्तेभ्योऽपि विशिष्टा "फलांशखाङ्कान्तरशिञ्जिनीघ्नी"ति भास्कर-प्रकारमूलतः प्रादुर्भूता वस्तुतः प्रशंसार्हा । एतत्कल्पनाबलेनैव सिद्धान्तशिरो-मणिस्पष्टाधिकारटिप्पण्यां श्रीबापूदेवश्च वक्रकेन्द्रांशानयनं चक्रे । अस्य सौजन्यं निष्पक्षपातरहितवर्णनं च टीकादिपञ्चमश्लोकेन

"तस्माद्व्यभ्युपपत्तिमस्य विमलां तन्मोहनाशाय तां
ज्ञात्वा मन्मतिकौशलं च गणकाः पश्यन्तु तुष्यन्तु ते ।

यदिहाऽशुद्धं च संशोध्यतां
हे वर्या गणका विलोक्य यदिहाऽशुद्धं च संशोध्यतां
किं वा प्रार्थनया परोपकृतिषु स्वाभाविकस्तद्गुणः ॥

टीकान्ते च

देशे पार्थसमाह्वयेऽतिरुचिरे तीरे च गोदोत्तरे
गोलग्रामपुरे पुरारिचरणार्चासक्तविद्वद्युते ।
आसीत्तत्र दिवाकरोऽतिचतुरो दैवज्ञसङ्घाग्रणी-
र्विश्वेशे सततं यदीयहृदयं यस्तस्य पुत्रोऽकरोत् ॥
मल्लारिर्गणकाग्रणीर्गुरुपदद्वन्द्वाब्जभक्तो रतो
लब्ध्वा बोधलवं ततो हि विवृतिं सार्थोपपत्तिं स्फुटाम् ।
वर्यस्य ग्रहलाघवस्य गणकश्रीमद्गणेशाभिध-
प्रोक्तस्याथ कृपालवो हि सुधियः पश्यन्तु तुष्यन्त्विमाम् ॥

इत्यादिना स्फुटम् ।

## नारायणः । १४९३

अयमनन्तनन्दनो देवगिरेर्नातिदूरप्रदेशे सौम्यदिशि धुसृणेशनामप्रसिद्ध-महादेवमन्दिरादुदक् टापरनामग्रामनिवासी त्रिनिधिवेदेन्दु १४९३ शके विवाहादिमुहूर्त्तवर्णनरूपं मुहूर्त्तमार्त्तण्डनामकं ग्रन्थं वेदनिधिसमुद्रशशाङ्कमिते १४९४ शके तट्टीकां च मार्त्तण्डवल्लभाख्यामकार्षीत् । अस्य पूर्वप्रतिपादितं कृतिद्वयमेव दृश्यते । ग्रन्थस्यावलोकनेन ज्यौतिषसिद्धान्तेऽस्य पाटवं स्फुटं परन्तु तत्राऽस्य काचित्कृतिर्नोपलभ्यते । मुहूर्त्तमार्त्तण्डगृहप्रकरणेऽनेनोज्ज्य-यिन्या यमदिशि चित्रास्वात्योर्भयोर्वेधेन तदुत्तरे च कृत्तिकोदयवेधेन प्राची-साधनं कृतम् । एतादृशं प्राचीसाधनं वेदे प्रसिद्धम् । एवमत्र मुहूर्त्तसम्बन्धिनो बहवो विशेषा वर्त्तन्ते । अयं ग्रन्थः शार्दूलविक्रीडितच्छन्दोभिः षष्ट्यधिक-शतसंख्याकैर्निबद्धोऽस्ति ।

अस्यान्ते

श्रीमत्कौशिकपावनो हरिपदद्वन्द्वार्पितात्मा हरि-
स्तज्जोऽनन्त इलासु रोचितगुणो नारायणस्तत्सुतः ।
ख्यातं देवगिरेः शिवालयमुदक् तस्मादुदक् टापरे
ग्रामस्तत्र्सतिर्मुहूर्त्तभुवनं मार्त्तण्डमत्राकरोत् ॥



त्र्यङ्केन्द्रप्रमिते १४९३ वर्षे शालिवाहनजन्मतः ।
कृतस्तपसि मार्त्तण्डोऽयमलं जयतूद्भुतः ॥

अयं मार्त्तण्डस्तपसि माघे कृतः । स चालमद्भुत उदयं गतो जयत्वि-त्यन्वयः कार्यः ।

मार्त्तण्डवल्लभायाष्टीकाया अन्ते च

आसीत् सासमणूरनामनगरे श्रीकौशिकस्यान्वयेऽ-
नन्तो वाजसनेयिपूज्यचरणो माध्यंदिनीयाग्रणीः ।
कृष्णस्तत्तनयः श्रुतिस्मृतिविदामग्रेसरेज्यो हरि-
स्तत्पुत्रः श्रुतिवित्तदात्मजवरोऽनन्तोऽग्निहोत्री गुरुः ॥
तत्पुत्रस्तदनुग्रहात्तधिषणो नारायणष्टापर-
ग्रामे शिष्यगणेच्छया निजकृतग्रन्थस्य टीकां स्फुटाम् ।
चक्रेऽस्यां कृपया परोपकृतये शोध्यं दुरुक्तं बुधै-
र्मादृक्षस्य विलोक्य धार्ष्ट्यमपि ते कुप्यन्ति नो सज्जनाः ॥
सुखनिधिपुरुषार्थक्ष्मासमाभिः १४९४ समाभिः
परिमितशककाले जातमार्त्तण्डटीकाम् ।
लिखति पठति विप्रः सोऽत्र भूयाद्धरित्र्यां
सुखनिधिपुरुषार्थक्ष्मासमावान् क्षमावान् ॥

भारतवर्षे मुहूर्त्तमार्त्तण्डोऽतीवप्रसिद्धो मुहूर्त्तेऽतिप्रामाणिको लिखितो मुद्रितश्च प्रायः सर्वत्रैवोपलभ्यते ।

## रङ्गनाथः । १४९५

अस्य पिता बल्लालसंज्ञो माता च गोजिनाम्नी जन्मस्थानं काशी । अयं सिद्धान्तशिरोमणिटीकामरीचिरचयितुर्मुनीश्वरस्य पिता कृष्णदैवज्ञा-नुजः पञ्चयुग्मशरचन्द्र १५२५ मिते शके सूर्यसिद्धान्तस्य टिप्पणं गूढार्थप्र-काशकं नामाऽऽरभत । एतस्य समये यूरपदेशीयानां वाणिज्यार्थं भारतवर्षे चारप्रचार आसीत् । सूर्यसिद्धान्तस्य गोलाध्याये यन्त्राधिकारे

"पारदाराम्बुसूत्राणि शुल्बतैलजलानि च ।
बीजानि पांसवस्तेषु प्रयोगास्तेऽपि दुर्लभाः" ॥ इति

द्वाविंशतिश्लोकस्य टीकायां " इयं स्वयंवहविद्या समुद्रान्तर्निवा-सिजनैः फिरङ्ग्याख्यैः सम्यगभ्यस्तेती"ति विलेखत्वात् यूरपदेशीयानामा-

गमनं स्फुटमवज्ञायते। अत्र सूर्यसिद्धान्तप्रकाराणामुपपत्तयो भास्करीयसि-द्धान्तशिरोमण्यनुसारेण प्रायो लिखिताः सन्ति। तत्त्वतिथि १५२५ मिते शके चैत्रशुक्लचतुर्दश्यां बुधे रात्रौ सूर्योदयात् सार्द्धद्विपञ्चाश ५२। ३० दूघटिकासु प्रसवदुःसहवेदनादुःखिताया आत्मप्रियाया दुःखेनोद्विग्नमनसस्त-द्दुःखोपशान्त्यर्थं सूर्यसिद्धान्तटिप्पणीं करिष्यामीति सङ्कल्पप्रवृत्तस्य रङ्ग-नाथस्य तत्क्षण एव मुनीश्वरस्य प्रादुर्भावो जातस्तेन रङ्गनाथेनेदं गूढप्रकाशकं मुनीश्वरस्य सहजमिति प्रोक्तम्। एतत्सर्वं स्ववंशवर्णनपूर्वकं ग्रन्थसमाप्तौ व्यलेखि चैनेन।

टिप्पण्यादौ

यत्स्मृत्याऽभीष्टकार्यस्य निर्विघ्नां सिद्धिमेष्यति।
नरस्तं बुद्धिदं वन्दे वक्रतुण्डं शिवोद्भवम्॥
पितरौ गोजिबल्लालौ जयतोऽम्बाशिवात्मकौ।
याभ्यां पञ्चसुता जाता ज्योतिःसंसारहेतवः॥
सार्वभौमजहांगीरविश्वासास्पदभाषणम्।
यस्य तं भ्रातरं कृष्णं बुधं वन्दे जगद्गुरुम्॥
नानाग्रन्थान् समालोच्य सूर्यसिद्धान्तटिप्पणम्।
करोमि रङ्गनाथोऽहं तद्गूढार्थप्रकाशकम्॥

अन्ते

भागीरथीतीरसंस्थे शम्भोर्वाराणसीपुरे।
बल्लालगणको रुद्रजपासक्तोऽभवद्बुधः॥

तस्यात्मजाः पञ्च गुणाभिरामा ज्येष्ठः स रामः सकलागमज्ञः।
येनोपपत्तिः स्वधिया नितान्तं प्रकाशिताऽनन्तसुधाकरस्य॥
ततः स कृष्णो जहँगीरसार्वभौमस्य सर्वाधिगतप्रतिष्ठः।
श्रीभास्करीयं विवृतं तु येन बीजं तथा श्रीपतिपद्धतिः सा॥
गोविन्दसंज्ञस्तु ततस्तृतीयस्तस्यानुजोऽहं गुरुलब्धविद्यः।
विश्वेशपत्पद्मनिविष्टचेताः काशीनिवासी सकलाभिमान्यः॥
श्रीरङ्गनाथोऽर्कमुखोत्थशास्त्रे गूढप्रकाशाभिधटिप्पणं सः।
कृत्वा महादेवबुधाग्रजोऽथ विश्वेश्वरायार्पितवान् सुवृद्ध्यै॥
शके तत्त्वतिथ्युन्मिते चैत्रमासे सिते शम्भुतिथ्यां बुधेऽर्कोदयान्मे।
दलाढ्यद्विनाराचनाडीषु जातौ मुनीशार्कसिद्धान्तगूढप्रकाशौ॥



गूढप्रकाशकं दृष्ट्वा रङ्गनाथमतं भुवि।
मुनीश्वरस्य सहजं लभन्तां गणकाः सुखम्॥

एतट्टिप्पणसहितं सूर्यसिद्धान्तपुस्तकं एशियाटिक्समाजाख्ये मुद्रितमस्ति। ग्रन्थारम्भे यदि रङ्गनाथवयस्त्रिंशद्वर्षमितं तदा रङ्गनाथजन्मशकः पञ्चनवपुरन्दर १४९५ मितः सिध्यति।

## गणेशः। १५००

अयं गोपालात्मजः तापीतीरवर्त्तिसूर्यपुरनिवासी बाणरामबाणेन्दुमिते १५३५ शके शुकफक्किकामूलोद्भूतं होरारूपं जातकालङ्कारनामकं ग्रन्थं व्यरचयत्। भारतवर्षे फलादेशकथनार्थमयं ग्रन्थः स्रग्धरावृत्तैः खेशपरिमितै ११० र्निबद्धोऽतीव प्रसिद्धः। गणेशः शिवपण्डितशिष्यो गुर्ज्जरब्राह्मण आसीदस्यान्या गणिते कृतिर्नोपलभ्यते। ग्रन्थसमाप्तौ

अभूदवनिमण्डले गणकमण्डलाखण्डलः
श्रुतिस्मृतिविहारभूर्विबुधमण्डलामण्डनः।
प्रचण्डगुणगुर्ज्जराधिपसभाप्रभातप्रभः
कवीन्द्रकुलभूषणं जयति कान्हजी कोविदः॥
भारद्वाजकुले बभूव परमं तस्मात्सुतानां त्रयं
ज्यायांस्तेष्वभवद्ग्रहज्ञतिलकः श्रीसूर्यसुरिः सुधीः।
श्रीमान् सर्वकलानिधिस्तदनुजो गोपालनामाऽभवत्
श्रीमद्दैवविदां वरस्तदनुजः श्रीरामकृष्णोऽभवत्॥
शाके मार्गणरामसायकधरासंख्ये १५३५ नभस्ये तथा
मासे ब्रध्नपुरे सुजातकमिदं चक्रे गणेशः सुधीः।
छन्दोऽलङ्कृतिकाव्यनाटककलाभिज्ञः शिवाध्यापकः
तत्र श्रीशिवविन्मुदे गणितभूर्गोपालसूनुः स्वयम्॥
तापीतीरे स्थितेऽकारि ब्रध्नाख्ये जातकं पुरे।
वापजीतिद्वितीयेन नाम्नेदं गणकेन च॥

अस्यैव गणेशस्य वापजीति नामान्तरमासीत्। अयं व्युत्पन्नः प्राचीनगद्यात्मकशुकमुनिप्रणीतफक्किकारूपजातकमवलम्ब्य पद्यैरिदं जातकालङ्काराख्यमकार्षीत्। अस्मिन् ग्रन्थे

संज्ञाध्यायः, भावफलाध्यायः, योगाध्यायः, विषकन्यायोगाध्यायः, इति सप्ता-
आयुर्दायाध्यायः, व्यत्ययभावफलाध्यायः, वंशवर्णनाध्यायः, तदा गणेश-
ध्यायाः सन्ति । ग्रन्थारम्भे यदि गणेशवयः पञ्चत्रिंशद्वर्षमितं
जन्मशकः पञ्चदशशत १५०० समः सिध्यति ।

## विश्वनाथदैवज्ञः । १५००

दिवाकरनन्दनोऽयं कृष्णविष्णुमल्लारिकेशवेभ्यः सर्वेभ्यः कनिष्ठः । लो-कोपकारार्थं सूर्यसिद्धान्तसिद्धान्तशिरोमणिनीलकण्ठीविष्णुकरणग्रहलाघव-मकरन्दानन्तसुधारसादिग्रन्थोपरि गणितक्रमप्रदर्शनरूपमुचितमुदाहरणमेत-त्कृतं दृश्यते । वस्तुतोऽस्य महान् परिश्रमः सर्वत्रैवोदाहरणक्रमप्रदर्शनोद्भूतः प्रशंसनीयः । विष्णुकरणोपरि धीवेदपञ्चेन्दु १५४५ शकीयमुदाहरणमुदाहर-णकाल एव सिद्धान्तकौशलं प्रकटयत्यस्य तदाऽस्य वयश्चेत्पञ्चचत्वारिंशद्व-र्षसमं कल्प्यते तदा तदीयजन्मशकः खखपञ्चेन्दु १५०० समः समायाति । उदाहरणानि विहाय स्वातन्त्र्येणास्य काचित्कृतिर्नोपलभ्यते ( शिवदैवज्ञ-वंशावली विलोक्याऽत्र ) ।

## नृसिंहदैवज्ञः । १५०८

अयं कृष्णदैवज्ञनन्दनो दिवाकरदैवज्ञजनकः शिवाग्रजः स्वकीयतातानु-जाभ्यां विष्णुदैवज्ञमल्लारिदैवज्ञाभ्यामधीतविद्यो वाराणस्यां पञ्चविंशतिवर्षवयः काले सूर्यसिद्धान्तटीकां सौरभाष्याख्यां पञ्चत्रिंशन्मितवयःकाले भास्करसि-द्धान्तशिरोमणिटीकां वासनावार्त्तिकाख्यां बहुविशेषगर्भां नवीनवासनाभूषितां च व्यरचयत् । अस्य वसुखपञ्चेन्दुसमे १५०८ शके जन्म । देवपञ्चेन्दु-शके १५३३ सौरभाष्यस्य गुणवेदपञ्चचन्द्रमिते १५४३ शके शिरोमणिवा-र्त्तिकस्य च रचना कृतानेन । यद्यपि स्वकृतग्रन्थप्रशंसा विशेषतः कृतैनेन तथापि बहुत्रान्यथैव प्रतिपादितम् । यथा गोलाध्यायज्योत्पत्तिवार्त्तिके योगान्तरज्योपपत्तौ ह्यनुपातयुक्त्या तदुपपत्तिवर्णनं सर्वं युक्तिरहितमेव । गोलाध्याययन्त्राधिकारे चक्रयन्त्रवर्णने यन्त्रराजस्य वर्णनं विस्तरतः कृतम् । यन्त्रराजस्यैव सुजभाख्यं नामान्तरमिति रामेणोक्तं तथा रामरचितयन्त्रप्र-काशस्थयन्त्रराजरचना चेति सर्वं विस्तरतो वर्णितं चात्र । एवमत्र वार्त्तिके तथा सौरभाष्ये बहवो विशेषा वर्तन्ते । सौरभाष्यं सम्पूर्णं वार्त्तिकं च काशि-



कराजकीयपुस्तकालये शुद्धं प्राचीनं दर्शनार्हं वर्तते । गोलवार्त्तिकसमाप्तौ ग्रन्थरचनादिसमयश्च वर्णितस्तद्यथा

गुणवेदशरेन्दु १५४३ सम्मिते शककाले नगरे पुरेशितुः ।
वसता वरणासिमध्यगे नरसिंहेन विनिर्मितं त्विदम् ॥
निजे तत्त्वमिते वर्षे सौरभाष्यं मया कृतम् ।
पञ्चत्रिंशन्मिते वर्षे वासनावार्त्तिकं कृतम् ॥
नवीनयुक्तिप्रतिपादनेन पूर्वोक्ततन्त्रादपि सद्विशेषम् ।
नरप्रणीतान्नृहरिप्रणीतं स्वीकार्यमार्यैः स्वधिया विचार्य ॥
गोदावरीसौम्यतटोपकण्ठग्रामे च गोलाभिधया प्रसिद्धे ।
विप्रो महाराष्ट्रसुगीतकीर्त्तिर्बभूव रामो गणकार्यवन्द्यः ॥
अग्रणीस्तैत्तरीयाणां भट्टाचार्यस्तु तत्सुतः ।
आसीन्मीमांसकश्रेष्ठः कुमारिल इवापरः ॥
गोत्रे भरद्वाजमुनेः पवित्रे दिवाकरस्तत्तनयो बभूव ।
वेदान्तशास्त्राभ्यसनेन काश्यां यः पुण्यराश्यां तनुमुत्ससर्ज ॥
सांवत्सरार्यस्य दिवाकरस्य श्रीकृष्णदैवज्ञ इति प्रसिद्धः ।
बभूव पुत्रः सुतरां पवित्रः सत्तीर्थकर्त्ताऽखिलशास्त्रवेत्ता ॥
तज्जस्तु तस्यैव कृपालवेन तातानुजावाप्तसमस्तविद्यः ।
सद्वासनावार्त्तिकनामधेयं ग्रन्थं नृसिंहो रचयांबभूव ॥

विस्तरतो वंशवर्णनमस्यानुजेन शिवदैवज्ञेन मुहूर्त्तचूडामणौ कृतं तदर्थं शिवदैवज्ञवर्णनं द्रष्टव्यम् ।

शताधिकसहस्रत्रयश्लोकसंख्या सौरभाष्ये सार्द्धपञ्चसहस्रश्लोकसंख्या शिरोमणिवार्त्तिके चास्ति ।

सौरभाष्यादौ सप्तमश्लोकेन

"श्रीविष्णुसञ्ज्ञकपितृव्यमुखारविन्दा-
न्मल्लारिसञ्ज्ञवदनादधिगम्य विद्याम् ।
सौरागमाब्धितरणाय नृणां करोमि
भाष्यप्लवं बहुविचारविशेषरम्यम्" ॥

अनेन स्वपितृव्याभ्यां विष्णुमल्लारिसञ्ज्ञाभ्यामस्य पठनं स्फुटमेव । गोलाध्याययन्त्राधिकारवासनावार्त्तिके बहूनां स्वयम्वहयन्त्राणां नामानि लि-खितानि । तद्यथा

"मयूरयन्त्र-ब्रह्मचारियन्त्र-शरवेधयन्त्र-बधूवरयोगयन्त्र-मेषाजयुद्धयन्त्र-शंखवादनयन्त्र-घण्टापटहादिवादनयन्त्र-वानरयन्त्र-घटीयन्त्र-हंसयन्त्राद्यानि स्वयंवहगोलयन्त्राद्यानि च बहुधा यन्त्राणि भवन्तीति"।

## विट्ठलदीक्षितः । १५०६

अस्य मुहूर्त्ते मुहूर्त्तकल्पद्रुमं तट्टीकां मुहूर्त्तकल्पद्रुममञ्जरीं च विहायान्याः कृतयो गणिते फलिते च नोपलभ्यन्ते । अनेन काश्यां तद्ग्रन्थद्वयमलेखि टीकान्तिमश्लोकेन

"नन्दाम्बुतिथ्युन्मितशाककाले काशीपुरे विट्ठलदीक्षितेन ।
मुहूर्त्तकल्पद्रुममञ्जरीयं समर्पिता श्रीशिवपादपद्मे" ॥

इत्यनेन टीकारचनाकालो नन्दसमुद्रतिथि १५४९ मितः शको ज्ञायते । टीकारचनाकालेऽस्य वयश्चेच्चत्वारिंशद्वर्षमस्माभिष्टीकादिभागो न दृष्टः । टीकारचनाकालेऽस्य वयश्चेच्चत्वारिंशद्वर्षमितं कल्प्यते तदा जन्मशको नन्दाभ्रतिथिमितः १५०६ सिध्यति । गृहारम्भप्रकरणे कल्पितनक्षत्रायाभ्यां पिण्डानयने न गणिते कश्चिद्विशेषस्तेन गणिते नास्य पाटवं सिध्यति । अस्य गुरुर्म्हालुगिदैवज्ञस्तेनापि पिण्डानयनं कृतमित्येतदर्थं मत्कृतः पिण्डप्रभाकरो द्रष्टव्यः । मूलग्रन्थान्तिमश्लोकैरयं बूबशर्म्मणस्तनयः कृष्णात्रिगोत्रः फलितेऽत्यभिमानी च भाति । मुहूर्त्तकल्पद्रुमेऽध्यायाः कुसुमरूपाः सन्ति यथाऽन्तिमाध्यायस्य विचित्रसंज्ञस्य समाप्तौ

"ग्रन्थाननेकानवलोक्य सम्यक् संदर्भिते विट्ठलदीक्षितेन ।
मुहूर्त्तकल्पद्रुमनामधेये विचित्रसंज्ञं कुसुमं समाप्तम्" ॥

एवं प्रत्यध्यायसमाप्तौ श्लोकाः सन्ति । विचित्रसंज्ञाध्याये अश्विन्यादीनां चुचेचोलेत्याद्यक्षराणां वर्णनं विचित्रश्लोकैः सुखेनाभ्यासार्थं विचित्रं कृतमस्ति ।

मुहूर्त्तकल्पद्रुमसमाप्तौ श्लोकाश्च

कृष्णात्रिगोत्रे नितरां पवित्रे पवित्रकर्म्माऽजनि बूबशर्म्मा ।
तत्सूनुना विट्ठलदीक्षितेन मुहूर्त्तकल्पद्रुम एष चक्रे ॥
कल्पद्रुमश्चेत्किमु रत्नमाला चिन्तामणिं कर्करमेव मन्ये ।
यदेकदेशे किल मञ्जरीयं सारं विचारं कुरु तत्त्ववेदिन् ॥



नानाफलाद्यैः कुसुमैः समेतः कल्पद्रुमः कल्पितवस्तुदायी ।
आकल्पमाकल्पविभूषितानां गृहेषु नित्यं विबुधाधिपानाम् ॥

"किमु रत्नमाला" "चिन्तामणिं कर्करमि"त्यादिना निजग्रन्थमुहूर्त्तकल्पद्रुमसंमुखे श्रीपतिकृतरत्नमालारामकृतमुहूर्त्तचिन्तामण्यो व्यर्थावित्यभिमानपूर्णमस्य वाक्यम् । वस्तुतः प्राचीनसङ्ग्रहपरोऽस्य ग्रन्थो न तादृशप्रशंसार्हः ।

## नारायणः । १५१०

गोविन्दतनयो मुनीश्वरगुरुर्मुनीश्वरलेखानुसारतः केशवपद्धतिटीकाकार आसीत् । काशिकराजकीयपुस्तकालये चैतत्कृतं खण्डितं बीजगणि*तमप्यस्ति यत्र सर्वाणि सूत्राणि चार्याछन्दोभिर्लिखितानि सन्ति । अत्रादौ ग्रन्थकृन्नाम न प्रथमपत्रपूर्वपृष्ठे "नारायणीबीजमि"ति लेखेनेदं नारायणकृतमवगम्यते । अत्र प्रकृतिरूपस्यावर्गाङ्कस्य रूपक्षेपीयकनिष्ठज्येष्ठाभ्यामासन्नपदानयनं वस्तुतो गणिते ग्रन्थकृत्पाटवं प्रकाशयति ।

तदानयनं च

१ "मूलं ग्राह्यं यस्य च तद्रूपक्षेपजे पदे तत्र ।
ज्येष्ठं ह्रस्वपदेनोद्धरेद्भवेन्मूलमासन्नम् ॥

अथ यद्यपि नारायणस्य तत्कृतग्रन्थसमाप्त्यवलोकनेन समयः स्फुटो भविष्यति तथापि मुनीश्वरलेखतोऽयं मुनीश्वरगुरु ( मुनीश्वरवर्णनं विलोक्यम् ) स्तेनास्य जन्मसमयो मुनीश्वरजन्मतः पञ्चदशवर्षपूर्वमिति कल्पनेन दशपञ्चदश १५१० समशकः सिध्यति । काशिकराजकीयपुस्तकालये बीजगणितस्य वर्गप्रकृतिपर्यन्तं ग्रन्थोऽस्ति । गणेशदैवज्ञेन बुद्धिविलासिन्यां प्रथमश्लोकटीकायां "श्रीधरनारायणादिभिरपि भाण्डजात्यादिकमन्यदप्युक्तं वास्तवं तु मिश्रादीनां त्रैराशिकैकगम्यत्वेन त्रैराशिकमेव पाटी"त्युक्तः । तत्र नारायणः कश्चिदन्यो गणेशतोऽपि पूर्वोऽयं च नवीन इति सर्वं गणेशसमयादेव स्फुटं भवति । गणेशो यस्य नारायणस्य चर्चां करोति स कदाचित्त्रिविक्रमजनको नारायणो भवेदिति त्रिविक्रमनिर्मितमुहूर्त्तग्रन्थस्य श्लोकशतात्मकस्यान्तिमश्लोकाभ्यां

* गोविन्दतनयेन नारायणेन न कृतं परन्तु नृसिंहनन्देन गणितकौमुदीनामक व्यक्तगणितग्रन्थकृता नारायणपण्डितेन कृतम् । गणितकौमुदीरचनाकालः १२७८ शकः । सं० ।

१ अयं श्लोको गणितकौमुद्या वर्गप्रकृतिव्यवहारेऽपि वर्त्तते । अस्मत्सम्पादकत्वेऽस्य ग्रन्थस्य पूर्वार्धः काशीस्थसरस्वतीभवनात्प्रकाशितोजातः । सं० ।

नारायणस्य तनयो ज्योतिर्जिह्वानुगो द्विजः ।
त्रिविक्रमशतश्लोकं व्यवहारममुं व्यधात् ॥
किञ्चित्कलियुगे जातेऽब्रूत ब्रह्मा त्रिविक्रमम् ।
तव जिह्वाग्रसंस्थेन शास्त्रमेतन्मया कृतम्" ॥

इत्याभ्यामनुमीयते ।

## शिवदैवज्ञः । १५१३

अयं कृष्णदैवज्ञसुतो नृसिंहानुजो दिवाकरादीनां गुरुर्ज्यौतिषशास्त्रैकप्रधानाध्यापकः सर्वं स्वकीयायुरध्यापनकर्म्मण्येव समापयत् । अतोऽस्य ज्यौतिषसिद्धान्तरचनाचातुरीरूपा न विपुला कृतिः किन्तु एकाऽनन्तसुधारसग्रन्थस्य विवृतिर्गणिते फलिते च मुहूर्त्तचूडामणिरन्येति कृतिद्वयमस्मद्दृष्टिगोचरीभूतम् । अयं जगतो गुरुरासीत् स्वसमये हीति दिवाकरेण स्वकृतजन्मपद्धत्यामलेखि ।

अनन्तसुधारसविवृत्यारम्भे

विघ्नध्वान्तनिवारणैकतरणिर्देवासुरैर्वन्दितः
सिद्धौ भक्तजनस्य वाञ्छितफलप्राप्त्यै सुराणां तरुः ।
सिन्दूरारुणितः ससिन्धुरमुखो नागेन्द्रबुद्ध्या परि-
भ्रान्तानेकमधुव्रतोऽभिलषिता वाणी सदा पूर्यताम् ॥

अन्ते

मथितेऽनन्तसुधाधरेण संख्याजलधौ बुद्धिगुणैर्बभूव योऽस्मात् ।
तमनन्तोत्थसुधारसं शिवोक्तेर्गणकाः पद्मनिभाक्षिभिः पिबन्तु ॥

मुहूर्त्तचूडामणेरादौ

सर्वसिद्धिसदनेऽखिलवन्द्ये दुष्कृतौघविनिवारणदक्षे ।
विघ्नराजपदपङ्कजयुग्मे चञ्चरीकसममस्तु मनो मे ॥

अस्यान्ते शिवदैवज्ञेन विस्तरतः स्ववंशावली लिखिता ।

तद्यथा

गोलग्रामे वाक्पतीनां जनानां गोलज्ञानां वा निवासेन सार्थम् ।
गोदावर्याः सौम्यतीराधिवासशालिन्याढ्ये तद्विदर्भाख्यदेशे ॥

सांवत्सरार्यबुधकेशवसूनुवर्य-
श्रीमद्गणेशगुरुलब्धमतिप्रबोधः ।



वेदान्तवेदितिलको गणको बभूव
श्रीमान् दिवाकर इति प्रथितः पृथिव्याम् ॥

पञ्चास्य पञ्चास्यसमप्रभावाः सगर्वदैवज्ञगजेन्द्रवृन्दे ।
पुत्रा बभूवुः सुतरां पवित्राः श्रीमद्भरद्वाजमहर्षिगोत्राः ॥

ज्येष्ठस्तेषां धरित्रीपतिविविधसभालब्धभूरिप्रतिष्ठः
सर्वाधीशस्य चञ्चत्पदयुगसततासेविविद्वद्वरिष्ठः ।
नव्यान् वाचां प्रबन्धान् सपदि बहुविधान् यो विधत्ते च सार्थान्
दैवज्ञाख्यामभिख्यां वहति विजयते कृष्ण एष द्विजेन्द्रः ॥

सदा मुदा सेवितभर्गसूनुः संख्यागमप्रौढत एव गर्गः ।
वाचां विलासैर्वचसामिवेशो जगद्गुरुर्विष्णुरिति द्वितीयः ॥

अनन्यसामान्यगुणातिरेकान्नरेन्द्रमौलिद्युतिरञ्जिताङ्घ्रिः ।
मल्लारिसंसेवनलब्धसंपन्मल्लारिनामा तनयस्तृतीयः ॥

तस्यानुजः केशवनामधेयः सुरूपधेयः शुभभागधेयः ।
श्रीविश्वनाथस्तदनुप्रसिद्धः संख्या न संख्यानमतौ हि यस्य ॥

श्रीकृष्णतः श्रीनरसिंहसंज्ञः सिन्धोः सुधारश्मिरिवोदियाय ।
यद्वासनाकल्पकतामवेक्ष्य श्रीभास्करं चेतसि न स्मरामः ॥

तस्यानुजः श्रीशिवनामधेयो मुहूर्त्तचूडामणिनामधेयम् ।
विनिर्म्ममे सारवदाद्यपद्यैः सच्छिष्यतोषाय पुरे पुरारेः ॥

ये पाठयन्ति च पठन्ति लिखन्ति चैनं
संवीक्ष्य येऽभिकथयन्ति जनाय वेलाम् ।
तेषां यशोविनयगौरवनैपुणानि
प्रज्ञेन्दिराप्रसहितानि भजन्ति वृद्धिम् ॥

अत्र चतुर्दशाध्यायाः सन्तिः । अन्तिमाध्याये सामुद्रिकलक्षणं निरूपितम् । अयं प्रतिबिम्बरूपो रामदैवज्ञनिर्मितस्य मुहूर्त्तचिन्तामणेः ।

जन्मचिन्तामणिकृद्यः शिवदैवज्ञः सो च रामदैवज्ञतनूजोऽस्माद्भिन्न इति । तदीयजन्मचिन्तामणिदशाध्यायसमाप्तौ

दैवज्ञाग्रिकमूर्द्धहीरकमणिः सत्संप्रदायाग्रणी-
र्विख्यातो भुवि रामदैवविदिति प्रत्यक्षवाचस्पतिः ।
तत्सूनोः कृतिनः शिवस्य हि कृतौ सज्जन्मचिन्तामणा-
वध्यायोऽपि दशाक्रमादिकथनः पूर्णो ह्यभूदष्टमः ॥

एवं प्रत्यध्यायसमाप्तौ श्लोकाः ।

अत्र वंशपरम्परा ।




शिवदैवज्ञो नृसिंहदैवज्ञानुजः । अतो नृसिंहतः पञ्चवर्षैर्लघुतरोऽयमिति कल्पनेन त्रयोदशाधिकपञ्चदशशतासन्नोऽस्य जन्मशकः समायातीति । यतोऽयं दिवाकरस्य वसुकरशरनिशाकर १५२८ शकजन्मनो गुरुरतो मदीया कल्पना युक्तियुक्ता ।

## बलभद्रमिश्रः । १५१४

अयं दामोदरस्य पुत्रो भरद्वाजगोत्रः कान्यकुब्जनगरनिवासी रामदैवज्ञशिष्यः पातिशाहसूजासमये राजमहलस्थाने हायनरत्ननामकं ताजकग्रन्थं वर्षफलविचारपरं प्राचीनमतसङ्ग्रहरूपं व्यरचयत् । फलग्रन्थवेदिनां मध्ये वर्षफलादिकथनेऽस्य ग्रन्थस्य महती प्रसिद्धिः । पूर्वार्द्धोत्तरार्द्धरूपमस्य खण्डद्वयं मुद्रितं लिखितं च सुलभेनोपलभ्यते हीदानीम् । सूजानामा शाहजहांसम्राजो द्वितीयः पुत्रः पित्रादेशेन बङ्गदेशे तत्रत्यप्रजाजनशासनार्थमासीत् । तस्यैव प्रियपण्डितोऽयं बलभद्रश्च तेन सह बङ्गदेशं गत इत्यनुमीयते। शाहजहांनिधनसमयश्च खनागपञ्चेन्दु १५८० शकः प्रसिद्धः। बलभद्रस्य ग्रन्थ समयश्च वेदरसपञ्चभूमितः १५६४ शक इति सर्वं हायनरत्नान्तिमश्लोकाभ्यां



पृथ्वीपतिमहावीरश्रीमत्साहिसुजान्तिके ।
श्रीराजमहलस्थेन मया ग्रन्थो विनिर्मितः ॥

योगो मासकृतेः समः करहतो योगस्तिथिः स्यात्तिथि-
स्त्रिघ्नी वारमितिस्तदर्धसदृशं भं सर्वयोगे युतः ।
भूवाणाक्षकुभिर्भवेच्छकमितिर्ग्रन्थस्य तां वेत्ति य-
स्तं मन्ये गणितद्वयज्ञकमलप्रोद्बोधने भास्करम् ॥

इत्याभ्यां ज्ञायते । अत्र सर्वं तिथ्यादिकं माससंख्ययैकयैव घटते अन्यासु माससंख्यासु तिथ्यादिकानां मानमसम्भवमुत्पद्यते तेन माससंख्या = १ । योगः = १ । तिथिः = २ । वारमितिः = ६ । भम् = ३ । सर्वयोगः = १३ । अयं भूवाणाक्षकुभि १५५१ युतः = १५६४ जातः शकः ।

ग्रन्थस्यादौ वंशवर्णनं सम्यक् कृतम् ।

तद्यथा

गणाधिपं रामगुरोः पदाब्जं दामोदराख्यं पितरं च नत्वा ।
प्राचीनपद्यैर्बलभद्रनामा करोति सद्धायनरत्नसंज्ञम् ॥
भागीरथीतीरविराजमाने श्रीकान्यकुब्जे नगरेऽतिरम्ये ।
अभूद्भरद्वाजमहर्षिवंशे श्रीलालनामा गणकोष्णधामा ॥
तस्यात्मजाः पञ्च बभूवुरेषां श्रीदेविदासः प्रथमो बभूव ।
व्यक्ते च यः श्रीपतिपद्धतौ च टीकां व्यधाच्छिष्यगणस्य तुष्ट्यै ॥
तस्माल्लघुः खेटविचारदक्षः प्रख्यातकीर्त्तिर्विजितारिपक्षः ।
श्रीक्षेमकर्णोऽथ ततः कनिष्ठो नारायणो व्याकरणे पटिष्ठः ॥
न्याये यः सुरराजपूजितनिभो वेदान्तिनामग्रणी-
र्मीमांसादिसमस्तशास्त्रकमलप्रोद्बोधने भास्करः ।
श्रीमद्भूपतिवृन्दवन्दितपदो भूदेवमूर्द्धामणिः
श्रीमन्मिश्रचतुर्भुजः समभवत्तस्माल्लघुर्धर्मवित् ॥
तस्माल्लघुः सकलशास्त्रकलापटिष्ठो
दामोदरः समभवत्कृतिनां वरिष्ठः ।
यो भास्करोदितपितामहकर्मतुल्यां
वृत्तिं व्यधात् निरुपमां कृतिनां हिताय ॥
दामोदरस्य तनयौ जातौ बलभद्रबलरामौ ।
बलभद्रेण च किञ्चित् प्रकाशयते ताजिकं गुरोः कृपया ॥

ग्रन्थस्यादौ यवनभाषोक्तमपि ज्यौतिषशास्त्रं पठनीयं पठने न दोष इत्यस्य मीमांसा विस्तरतः कृता ग्रन्थकृता। ग्रन्थरचनासमयेऽस्य वयः पञ्चाशद्वर्षसमं कल्प्यते तदा जन्मशको वेदेन्दुपञ्चेन्दु १५१४ समः सिध्यति।

## सोमदैवज्ञः । १५२४

रुद्रभट्टतनूजः पञ्चाङ्गे वर्षराजमन्त्रिधान्येशादिशुभाशुभफलकथनरूपां पञ्चशत ५०० श्लोकैः समुद्ररसबाणेन्दु १५६४ शके कल्पलतामकरोत्।

इयं कल्पलता पञ्चाङ्गोपयोगिनी ललितपद्यपल्लवैरुपेता प्रायः सर्वत्र लिखिता मुद्रिता चोपलभ्यते। अस्या आदौ कृतयुगादीनां व्यवस्था तत्र "कलियुगमध्ये धर्मः ५ पापं १५ शककर्त्तारो युधिष्ठिरः ३०४४। विक्रमः १३५। शालिवाहनः १८०००। विजयाभिनन्दनः १००००। तन्मध्येऽवताराश्चैकः। त्र्यम्बकेश्वरलिङ्गपूजनम्। मायापुरपीठम्। गौतमीतीर्थम्। तत्र राजानः पृथ्वीभोक्तारः। युधिष्ठिरः, शालिवाहनः, विक्रमः, नागार्जुनः, विजयाभिनन्दनः, कल्किः, एते राजानः। म्लेच्छोत्पत्तिः॥ तिमिर्लिङ्गशाहो राज्यस्थित्यब्दः व. २४ मा. ११ दि.२४॥ तदुपरि बाबर्लिङ्गशाहो राज्यस्थित्यब्दः। व. २० मा. ८ दि. २४॥ हुमाहुजाहुर्लिङ्गो राज्यस्थित्यब्दः व. ११ मा. ६ दि. २६॥ अकबरशाहो राज्यस्थित्यब्दः व. ५४ मा. ११ दि. २७॥ शाहजहांशाहो राज्यस्थित्यब्दः व. १८ मा. ४ दि. १०॥ अवरङ्गशाहो राज्यस्थित्यब्दः व.२५ मा. ८ दि. २४॥ चिन्मीशाहो राज्यस्थित्यब्दः व. २२ मा. ९ दि. ४॥ वृद्धनीजामल्लशाहो राज्यस्थित्यब्दः व. ५० मा. ४ दि. २७॥ तदुपरि शूद्र राजानः, रामराजः, व. २० मा. ६ दि. २४॥ भोजराजः, राज्यस्थित्यब्दः व. ४० मा. ९ दि. २७॥ दीनानाथराजः व. ७० मा. ११ दि. २७॥ शिवाजीराजः व. २० मा. ४ दि. २७॥ रामराजः व. ४४ मा. ४ दि. २६॥ रामराजः व २० मा. ९ दि. ११॥ शंभाजीराजः व. ५८ मा. ८ दि. १॥ बलवन्तसिंहो राजा व. ३३ मा. १० दि. १॥ एते राजानो राज्यमकुर्वन्" इत्यादि सर्वं परस्परमसङ्गतं लिखितमस्ति। एतल्लेखतोऽयं ग्रन्थ आधुनिकस्तत्कृता समाप्तौ



"वेदरसेन्द्रियभू १५६४ मितशाके कार्त्तिकसंज्ञकमासि सितेऽर्द्धे।
आद्यतिथौ भृगुजेऽनलधिष्ण्ये कल्पलता परिपूर्त्तिमुपेता"॥

इति श्लोको वञ्चनया लिखितो वा केनचिदनभिज्ञेन तद्ग्रन्थमध्ये स राजराज्यकालप्रदर्शको लेखः प्रक्षिप्त इत्यनुमीयते। अन्तिमकल्पनाया विशेषसम्भवोऽस्ति ग्रन्थस्थश्लोकैः सोमभट्टस्य व्याकरणे काव्ये चातिव्युत्पन्नत्वात् तादृशस्य विदुषो मिथ्याकल्पनानौचित्याच्च। युगव्यवस्थानन्तरं मङ्गलरूपेण

"मत्स्येन्द्रनाथचरणस्मरणप्रवीणः श्रीरुद्रभट्टतनयो विनयोपपन्नः।
सोमाभिधानगणको गणकोरुतुष्ट्यै संवत्सरादिफलकल्पलतां तनोमि"

इत्यनेन लेखेनायं गोरक्षनाथगुरोर्मत्स्येन्द्रनाथस्य मतानुयायीत्यनुमीयते। अथ चेद्ग्रन्थसमाप्तिशकस्तल्लिखित एव समीचीनः कल्प्यते तत्समये ग्रन्थकृद्वयश्चत्वारिंशद्वर्षसमं च तदाऽस्य जन्मशको वेदकरपञ्चेन्दु १५२४ समः समायाति।

## मुनीश्वरः। १५२५

सूर्यसिद्धान्तटिप्पणगूढप्रकाशकृतो रङ्गनाथस्य तनयो विश्वरूपाऽपरनामकोऽयं तत्त्वतिथ्यु १५२५ न्मिते शके समजनि (रङ्गनाथवर्णनं द्रष्टव्यम्)। सूर्यसिद्धान्तोक्तान् भगणादीन् सङ्गृह्य वसुरसपञ्चदश १५६८ शके भाद्रपदशुक्लपञ्चम्यां सोमवासरे पुष्यनक्षत्रे ज्यौतिषसिद्धान्तग्रन्थं सिद्धान्तसार्वभौ* माख्यमकार्षीत्। अयं सिद्धान्तग्रन्थो यद्यपि काव्यकलाकलापमण्डितो ज्यौतिषपण्डितमान्यस्तथापि चापीयक्षेत्रप्रपञ्चरहितः क्षेत्रसजातीयविचारविधुरः सम्प्रति गोलकलाकलापचतुरैरनादृतः। मुनीश्वरेणैतट्टीका च स्वाशयप्रकाशिनी द्विनगपञ्चदश १५७२ शके स्वयं रचिता।

निसृष्टार्थदूत्यभिधा लीलावतीटीका मरीच्यभिधा सिद्धान्तशिरोमणिटीका पाटीसारश्चेत्येते ग्रन्थाश्च मुनीश्वरकृताः प्रसिद्धा उपलभ्यन्ते। मरीचौ प्राचीनवचनानां बहूनां सङ्ग्रहो वस्तुतो दर्शनार्हः। लीलावतीटीका च सम्प्रति सर्वत्र भारतवर्षेऽन्यटीकात उत्तमोत्तमेति ज्योतिर्विद्भिर्मता। सिद्धान्तसार्वभौमस्य पञ्चमश्लोकेन

"गूढं स्थूलं स्वशिद्धान्तं मत्वा यस्तच्छिरोमणिम्।
कृतवान्मनुजव्याजादसौ जयति भास्करः"॥

* ज्यौति आ० मुरलीधरठक्कुरसम्पादकत्वे काशीस्थसरस्वतीभवनादस्य ग्रन्थस्य पूर्वार्धः स्पष्टाधिकारान्तः प्रकाशितो जातः। सं०।

ग्रन्थस्यादौ यवनभाषोक्तमपि ज्यौतिषशास्त्रं पठनीयं पठने न दोष इत्यस्य मीमांसा विस्तरतः कृता ग्रन्थकृता। ग्रन्थरचनासमयेऽस्य वयः पञ्चाशद्वर्षसमं कल्प्यते तदा जन्मशको वेदेन्दुपञ्चेन्दु १५१४ समः सिध्यति।

## सोमदैवज्ञः। १५२४

रुद्रभट्टतनूजः पञ्चाङ्गे वर्षराजमन्त्रिधान्येशादिशुभाशुभफलकथनरूपां पञ्चशत ५०० श्लोकैः समुद्ररसबाणेन्दु १५६४ शके कल्पलतामकरोत्।

इयं कल्पलता पञ्चाङ्गोपयोगिनी ललितपद्यपल्लवैरुपेता प्रायः सर्वत्र लिखिता मुद्रिता चोपलभ्यते। अस्या आदौ कृतयुगादीनां व्यवस्था तत्र "कलियुगमध्ये धर्मः ५ पापं १५ शककर्त्तारो युधिष्ठिरः ३०४४। विक्रमः १३५। शालिवाहनः १८०००। विजयाभिनन्दनः १००००। तन्मध्येऽवताश्चैकः। त्र्यम्बकेश्वरलिङ्गपूजनम्। मायापुरपीठम्। गौतमीतीर्थम्। तत्र राजानः पृथ्वीभोक्तारः। युधिष्ठिरः, शालिवाहनः, विक्रमः, नागार्जुनः, विजयाभिनन्दनः, कल्किः, एते राजानः। म्लेच्छोत्पत्तिः॥ तिमिर्लिङ्गशाहो राज्यस्थित्यब्दः व. २४ मा. ११ दि. २४॥ तदुपरि बाबर्लिङ्गशाहो राज्यस्थित्यब्दः। व. २० मा. ८ दि. २४॥ हुमाहुजाहुर्लिङ्गो राज्यस्थित्यब्दः व. ११ मा. ६ दि. २६॥ अकबरशाहो राज्यस्थित्यब्दः व. ५४ मा. ११ दि. २७॥ शाहजहांशाहो राज्यस्थित्यब्दः व. १८ मा. ४ दि. १०॥ अवरङ्गशाहो राज्यस्थित्यब्दः व. २५ मा. ८ दि. २४॥ चिन्मीशाहो राज्यस्थित्यब्दः व. २२ मा. ९ दि. ४॥ वृद्धनीजामल्लशाहो राज्यस्थित्यब्दः व. ५० मा. ४ दि. २७॥ तदुपरि शूद्र राजानः, रामराजः, व. २० मा. ६ दि. २४॥ भोजराजः, राज्यस्थित्यब्दः व. ४० मा. ९ दि. २७॥ दीनानाथराजः व. ७० मा. ११ दि. २७॥ शिवाजीराजः व. २० मा. ४ दि. २७॥ रामराजः व. ४४ मा. ४ दि. २६॥ रामराजः व २० मा. ९ दि. ११॥ शंभाजीराजः व. ५८ मा. ८ दि. १॥ बलवन्तसिंहो राजा व. ३३ मा. १० दि. १॥ एते राजानो राज्यमकुर्वन्" इत्यादि सर्वं परस्परमसङ्गतं लिखितमस्ति। एतल्लेखतोऽयं ग्रन्थ आधुनिकस्तत्कृता समाप्तौ



"वेदरसेन्द्रियभू १५६४ मितशाके कार्त्तिकसंज्ञकमासि सितेऽर्द्धे।
आद्यतिथौ भृगुजेऽनलधिष्ण्ये कल्पलता परिपूर्त्तिमुपेता"॥

इति श्लोको वञ्चनया लिखितो वा केनचिदनभिज्ञेन तद्ग्रन्थमध्ये स राजराज्यकालप्रदर्शको लेखः प्रक्षिप्त इत्यनुमीयते। अन्तिमकल्पनाया विशेषसम्भवोऽस्ति ग्रन्थस्थश्लोकैः सोमभट्टस्य व्याकरणे काव्ये चातिव्युत्पन्नत्वात् तादृशस्य विदुषो मिथ्याकल्पनानौचित्याच्च। युगव्यवस्थानन्तरं मङ्गलरूपेण

"मत्स्येन्द्रनाथचरणस्मरणप्रवीणः श्रीरुद्रभट्टतनयो विनयोपपन्नः।
सोमाभिधानगणको गणकोरुतुष्ट्यै संवत्सरादिफलकल्पलतां तनोमि"

इत्यनेन लेखेनायं गोरक्षनाथगुरोर्मत्स्येन्द्रनाथस्य मतानुयायीत्यनुमीयते। अथ चेद्ग्रन्थसमाप्तिशकस्तल्लिखित एव समीचीनः कल्प्यते तत्समये ग्रन्थकृद्वयश्चत्वारिंशद्वर्षसमं च तदाऽस्य जन्मशको वेदकरपञ्चेन्दु १५२४ समः समायाति।

## मुनीश्वरः। १५२५

सूर्यसिद्धान्तटिप्पणगूढप्रकाशकृतो रङ्गनाथस्य तनयो विश्वरूपाऽपरनामकोऽयं तत्त्वतिथ्यु १५२५ न्मिते शके समजनि ( रङ्गनाथवर्णनं द्रष्टव्यम् )। सूर्यसिद्धान्तोक्तान् भगणादीन् सङ्गृह्य वसुरसपञ्चदश १५६८ शके भाद्रपदशुक्लपञ्चम्यां सोमवासरे पुष्यनक्षत्रे ज्यौतिषसिद्धान्तग्रन्थं सिद्धान्तसार्वभौ*माख्यमकार्षीत्। अयं सिद्धान्तग्रन्थो यद्यपि काव्यकलाकलापमण्डितो ज्यौतिषपण्डितमान्यस्तथापि चापीयक्षेत्रप्रपञ्चरहितः क्षेत्रसजातीयविचारविधुरः सम्प्रति गोलकलाकलापचतुरैरनादृतः। मुनीश्वरेणैतट्टीका च स्वाशयप्रकाशिनी द्विनगपञ्चदश १५७२ शके स्वयं रचिता।

निसृष्टार्थदूत्यभिधा लीलावतीटीका मरीच्यभिधा सिद्धान्तशिरोमणिटीका पाटीसारश्चेत्येते ग्रन्थाश्च मुनीश्वरकृताः प्रसिद्धा उपलभ्यन्ते। मरीचौ प्राचीनवचनानां बहूनां सङ्ग्रहो वस्तुतो दर्शनार्हः। लीलावतीटीका च सम्प्रति सर्वत्र भारतवर्षेऽन्यटीकात उत्तमोत्तमेति ज्योतिर्विद्भिर्मता। सिद्धान्तसार्वभौमस्य पञ्चमश्लोकेन

"गूढं स्थूलं स्वशिद्धान्तं मत्वा यस्तच्छिरोमणिम्।
कृतवान्मनुजव्याजादसौ जयति भास्करः"॥

* ज्यौति आ० मुरलीधरठक्कुरसम्पादकत्वे काशीस्थसरस्वतीभवनादस्य ग्रन्थस्य पूर्वार्धः स्पष्टाधिकारान्तः प्रकाशितो जातः। सं०।

इत्यनेनायं भास्करस्यातीव भक्त आसीदिति ज्ञायते । तेनैव * भास्करविरोधिना कमलाकरेण महान् विरोध उत्पन्नोऽस्य । ग्रहस्पष्टीकरणोपपत्त्यर्थं मुनीश्वरकृताया भङ्ग्याः खण्डनं भङ्गीविभङ्गीनाम्ना कमलाकराज्ञया कमलाकारानुजेन रङ्गनाथाभिधेनाकारि । तत्खण्डनखण्डनं च मुनीश्वरकृतमुपलभ्यते । एतत्खण्डनप्रतिखण्डनानां कतिपयानां सङ्ग्रहः काशिकराजकीयपुस्तकालये वर्त्तते । आसीन्मुनीश्वरः स्वसमयेऽतिप्रख्यातः काव्यकोशव्याकरणाभिज्ञो ज्यौतिषशास्त्रीयगोलक्षेत्रविचारेष्वप्रौढ इति तत्कृतिविलोकनेन स्फुटमिति सुधीभिर्भृशं विचिन्त्यम् ।

सिद्धान्तसार्वभौमसमाप्तौ ।

भाद्रे मासे शुक्लपक्षेऽहितिथ्यामिन्दोर्वारे पुष्यभे योऽभवत्तम् ।
अष्टाङ्गाक्षक्ष्मामिते १५६८ शाकयातवर्षेऽकार्षीत् सार्वभौमं मुनीशः ॥

अत्र महाप्रश्नाधिकारे प्रश्नरूपेण शाहजहांनृपतिगृहीतबलखसमयः षट्पञ्चदश १०५६ समः सनकालश्च लिखितः

"प्रतीपविषयाशया स नरवाहिनीतीरमा-
सभूमिकरतारिखागमविशङ्क ईज्यद्युतिः ।
पयोनिधिजमादिलावलिदिगीशपक्षाहते-
र्बलाद्बलखमग्रहीत् प्रवरसाहजाहां नृपः" ॥

लीलावत्या माधुर्यगुणसम्पन्नाया युवत्या दूतीमन्तरा चतुराणां समागमो हि दुरवगमस्तदर्थं टीकारूपा दूती रचिता मुनीश्वरेण । "लीलावतीचतुरसङ्गविधानहेतोः श्रीमन्मुनीश्वरविदा यतिता सुदूती । तस्यामितः समभवत् खलु सोऽङ्कपाशो यो मन्दबोधपुरुषैरपि सुप्रसन्नः" । इत्यन्तिमाध्यायश्लोकः । एवं प्रत्यध्यायसमाप्तौ श्लोका उपलभ्यन्ते ।

लीलावतीटीकान्ते

अयं लीलावत्याः पटुदुरवगाहोऽतिगहनो
मनोभावो भूयांस्तदधिगतयेमां व्यरचयत् ।
मुनीशस्तामेतां कृतिमकृतिदुष्प्राप्यविषयां
निसृष्टार्थां दूतीमिव भजत भावेन चतुराः ॥

* प्रयागे मकरस्नानसमये भास्करमतमण्डनतत्परस्य मुनीश्वरस्य तन्मतविरोधिना हठादाकृष्टमानसेन ज्यौतिर्वित्सभायां कमलाकरेण बिरोधः समुत्पन्न इति चिराज्जनश्रुतिः । दुर्गाशङ्करपाठकवर्णनं विलोक्यम् ) ।



मरीच्यादौ

श्रीरङ्गनाथाभिधतातपादाः कृष्णानुजाः श्रीकमलाधिपास्ते ।
त्रिस्कन्धपारङ्गमरङ्गमल्ला बल्लालजा भूमितले जयन्ति ॥

नारायणो गणितशास्त्रकलाकलापः
श्रीसेवितः सकलशास्त्रसरोजभृङ्गः ।
दैवज्ञकृष्णगुरुपादरतो गुरुर्मे
क्ष्मायां जयत्यखिलपण्डितवन्द्यपादः ॥

मुनीश्वरापराख्येन विश्वरूपेण घृष्यते ।
बुद्धिशाणे मरीच्यर्थं तत्सिद्धान्तशिरोमणिः ॥

बुद्धिशाणे शिरोमणिं संघृष्य मुनीश्वरेण मरीचिरुत्पादितस्तेनैव मरीचिरिति संज्ञा लब्धा मुनीश्वरकृता शिरोमणिटीकेत्युपरिलिखितान्तिमश्लोकेन स्फुटम् ।

गोलाध्यायमरीच्यन्ते

एलचपुरसमदेशे तटे पयोष्ण्याः शुभे दधिग्रामे ॥
ज्योतिर्विद्याविद्भिः सकलैः शिरसा मुदा बुधैर्मान्यः ।

तस्मादभवद्रामः सकलैः सुगुणैर्नितान्तमभिरामः ।
शासद्भिदर्भदेशं मूद्र्धाऽधाद्भूमिपो यदादेशम् ॥

सोऽजनयत्सीतायां त्रिमल्लसंज्ञं सुतं विनीतायाम् ।
येन सदा विनयेन प्रकाशितं नाम भुवि नयेन ॥

बल्लालस्तत्तनयः सदैव यः कविवरेषु दत्तनयः ।
अपहाय स्वग्रामं काश्यामागाद्व्रजन् स विद्रामम् ॥

ज्योतिः शास्त्रवराम्भोजप्रकाशनदिनेश्वरात् ।
प्रासूत पञ्चतनयानयं गणकपुङ्गवः ॥

ज्यायानमीषां खलु रामनामा सदैव कामारिसमर्पितात्मा ।
विभूषयन् धूर्जटिराजधानीमसाविदानीमपि संचकास्ति ॥

तस्यानुजः सकलशास्त्रसरोजभृङ्गो
बीजक्रियाविवृतिकल्पलतानिदानम् ।
श्रीनूरदीनयवनप्रणयैकपात्रं
कृष्णो बभूव जनिपद्धतिवृत्तिकारः ॥

तस्यानुजस्तु गोविन्दगणको यत्सुतोऽकरोत् ।
नारायणः केशवोक्तपद्धत्याष्टिप्पणं सुधीः ॥
गौरीवल्लभपादपङ्कजमिलन्माध्वीरसास्वादन-
स्वच्छान्तःकरणः श्रुतिस्मृतिरतो गोविन्दविज्ञानुजः ।
ग्रन्थे योऽर्ककृतेऽकरोद्विवरणं गूढप्रकाशं महा-
देवस्याग्रजनिर्गृहस्थकमलः श्रीरङ्गनाथोऽभवत् ॥
तस्यात्मजो गुरुकृपाजनितावबोधः
शास्त्रं विभाव्य निखिलं महताऽऽदरेण ।
श्रीभास्करोदितशिरोमणिगूढभाव-
व्याख्यां मुनीश्वरकृती कृतवान् मरीचिम् ॥
शको भूयुतो नन्दभूहृत् फलस्य निरेकस्य मूलं निरेकं भवेद्गम् ।
तदर्द्धं भवेन्मास इन्दूनितोऽयं तिथिद्व्यूनिता पक्षवारौ भवेताम् ॥
नक्षत्रवारतिथिपक्षयुतिश्च योगो
विश्वैर्युताखिलयुतेः पदमभ्रवेदाः ।
अस्यादिमोऽत्र परिपूर्त्तिमितो मरीचिः
श्रीवासुदेवगणकात्मजनिर्मितोऽयम् ॥
खाङ्गबाणधरणीमितशाके चन्द्रवारसितपक्षशुचौ हि ।
लेखितं गणकदर्शनहेतोरुत्तरार्द्धमिदमात्ममरीचेः ॥

उपान्तिमश्लोकेन विपरीतक्रियया सप्तबाणबाणेन्दुशको १५५७ मरीचिपूर्वार्द्धसमाप्तिसमयोऽन्तिमेन च खाङ्गबाणेन्दु १५६० शक उत्तरार्द्धसमाप्तिसमयश्च सिध्यति । सिद्धान्तशिरोमणेरन्वयादिना पदार्थप्रकाशिन्या मरिच्याख्य टीकया समा नान्या टीका विलोक्यत अत इयमेव सर्वज्योतिर्विद्भिरादृता जागर्त्ति । अस्यां श्लोकसंख्या पञ्चविंशतिसहस्रसंख्यासन्ना लीलावतीटीकायां ६००० सिद्धान्तसार्वभौमे च ३००० ।

## दिवाकरः । १५२८

अस्य नृसिंहपुत्रस्य भरद्वाजकुलोद्भूतस्य स्वपितृव्यशिवदैवज्ञतो लब्धविद्यस्य जन्मशकः वसुकरपञ्चेन्दु १५२८ मितः ।

अयं भारतवर्षेऽतीव प्रथितो ज्यौतिषेऽतीव निष्णातः काव्यकोशव्याकरणन्यायादिशास्त्रेषु कुशलोऽनेकग्रन्थरचयिता चासीत् । अस्यानेके शिष्याः



कमलाकरादयो ज्यौतिषशास्त्रे पटीयांसोऽभूवन् । गोदावर्य्याः सौम्यतटे गोलनामग्रामेऽस्य स्थितिः । नगाम्भोधिशरचन्द्रमिते १५४७ शके नन्देन्दु १९ वर्षसमवयःकालेऽनेन ग्रहाणां भावादिबलसाधनार्थं फलादेशैकसहायिनी जातकमार्गपद्मरूपाऽष्टाधिकाररूपाष्टदलसहिता चतुरधिकैकशतपद्यांशुभिर्जातकपद्धतिः प्रकाशिता । इयं पद्धतिः केशवश्रीपतिदैवज्ञकृतपद्धत्यनुसारिणी-एव ।

तत्रादौ

श्रीमच्छिवाख्यं गणितज्ञचक्रचूडामणिं सज्जनवृन्दवन्द्यम् ।
विदुर्विदो यं धिषणेन तुल्यं तं नौमि नित्यं धिषणाप्तिहेतोः ॥
श्रीकेशवश्रीपतिसुन्दरादिप्रणीततन्त्रादधिगत्य सारम् ।
प्रकाश्यते सुज्ञदिवाकरेण पद्यांशुभिर्जातकमार्गपद्मम् ॥

अन्ते च

गोदावरीसौमतटस्थगोलग्रामे भरद्वाजकुलावतंसः ।
आसीद्द्विधिज्ञः सकलागमज्ञः कृष्णो महेशार्चनतत्परो यः ॥
बभूवतुस्तस्य सुतौ तदाद्यो मीमांसकाद्यो गणको नृसिंहः ।
शिरोमणेर्वार्त्तिकमुक्तियुक्तं येनाऽमलं भाष्यमकारि सौरम् ॥
विज्ञातनक्षत्रनभोगकक्षो विचारदक्षो विजितारिपक्षः ।
शिवो द्वितीयो गणको वदान्यो नृपालमान्यो जगतो गुरुर्यः ॥
नृसिंहपुत्रेण पितृव्यलब्धप्रबोधलेशेन दिवाकरेण ।
प्रकाशितं जातकमार्गपद्ममध्यायरूपाष्टदलं सुबोधम् ।
नन्देन्दु १९ वर्षेण मया कृतोऽयं
ग्रन्थो रवेः पादयुगप्रभावात् ।
शाके नगाम्भोधिशरेन्दु १५४७ तुल्ये
प्राचां निबन्धान् परिभाव्य सम्यक् ॥

इयं जातकपद्धतिर्मुद्रिता न । प्रधानगणकानां निकटेऽस्या लिखितपुस्तकं वर्त्तते । काशिकराजकीयपुस्तकालये चातिप्राचीना स्फुटा शुद्धा चैका प्रतिवर्त्ततेऽस्याः । अस्या एव पद्मजातकमित्ति नामान्तरम् ।

एतद्रचितमकरन्दविवरणस्यादौ

प्रज्ञां यतः प्राप्य कृतप्रतिज्ञं स्पर्द्धां विधत्ते प्रसभं प्रतिज्ञम् ।
अज्ञोऽपि तं श्रीशिवनामधेयं गुरूपमं स्वीयगुरुं भजेयम् ॥

इदं मुद्रितमप्युपलभ्यते पुस्तकम् ।

अथैतद्रचितया केशवपद्धतिटीकया प्रौढमनोरमाख्यया स्पष्टमवगम्यते· ऽस्य पाण्डित्यं गोले व्याकरणे न्याये काव्यसाहित्ययोश्च । अत्र ग्रहयुद्धजव- लानयनस्थले-११ श्लोके । अतिव्याप्तिव्याप्तिविधिना निरूपितलक्षणेन न्यायशास्त्रेऽस्य पाठवं स्फुटम् । इयं बहुविशेषवाक्यगर्भा गोलप्रपञ्चमण्डि- ताऽस्य सर्वं पण्डित्यं प्रकटयति । उपलभ्यते चेयं लिखिता मुद्रिता च सर्व- त्रैव । नागाम्भोधिशरेन्दु १५४८ मिते शाके विरचिता दिवाकरेणेयम् ।

अस्या आदौ

आदित्यमज्ञानघनान्धकारच्छिदं मुदं सन्ततमादधानम् ।
जगत्प्रसूतिस्थितिनाशहेतुं श्रीभास्करं भास्वररूपमीडे ॥

विघ्ननिघ्नमहं वन्दे विघ्नपं विबुधार्चितम् ।
यस्य स्मरणतः साध्यं सिद्धिं प्राप्नोति सत्वरम् ॥

श्रीकेशवार्यवचनानि जयन्ति तानि निर्दूषणानि बहुलार्थसुपूरितानि ।
धन्यानि शिष्यजनबुद्धिविवृद्धिदानि स्वल्पाक्षराणिबुधतोषविधायकानि॥

अपि स्फुरत्पण्डितमण्डनेन प्रचण्डपाण्डित्यमखण्डि येन ।
ज्ञानाधिराजस्य गुरुं नृसिंहं प्रचण्डचण्डांशुमतिं तमीडे ॥

श्रीमच्छिवाख्यं गणितज्ञचक्रचूडामणिं सज्जनवृन्दवन्द्यम् ।
विदुर्विदो यं धिषणेन तुल्यं तं नौमि नित्यं धिषणाप्तिहेतोः ॥

श्रीकेशवार्यैर्गगनाब्धि ४० वृत्तबद्धोदिता जातकपद्धतिर्या ।
तैरेव तस्या विवृतिः कृतास्ति परं न तत्रास्ति सुयुक्तिरुक्ता ॥

संप्रार्थितः शिष्यगणेन युक्तिः कार्यातिवर्यैति दिवाकरोऽहम् ।
सवासनां तद्विवृतिं करोमि यतो जनो मे सकलोऽपि रञ्ज्यः ॥

यद्यप्यसक्ता विवृतिर्विधातुं मया जडेनामलकेशवोक्तेः ।
तथापि कुर्वे शिवपादपद्मप्रसादतः प्रौढमनोरमाख्याम् ॥

अस्या अन्ते निजवंशवर्णनमप्यकारि दिवाकरेण तद्यथा

गौतम्युत्तरतीरवर्त्तिनगरे गोलज्ञविद्वद्युते
गोलग्रामसमाह्वये मुनिभरद्वाजान्वये दैववित् ।
योऽभूत्सुज्ञदिवाकरो बुधवरः श्रीकेशवस्यात्मजा-
द्दैवज्ञार्यगणेशसंज्ञकगुरोर्लब्धावबोधांशकः ॥



तस्मान्महेशार्चनलब्धसौख्यः श्रीकृष्णनामाऽजनि विप्रमुख्यः ।
कालत्रयज्ञानवता हि येन दैवज्ञशब्दो भुवि सार्थकोऽभूत् ॥
तस्मादभूतां तनयौ तदाद्यो मीमांसकाद्यो गणको नृसिंहः ।
शिरोमणेर्वार्त्तिकयुक्तियुक्तं सौरं च भाष्यं समकारि येन ॥
सद्विद्याराजमानः सुखदलितपरोद्दण्डचण्डाभिमानः ।
सिद्धान्ताभिज्ञसुज्ञद्विजवरनिवहोद्गीतकीर्त्तिः सुमूर्त्तिः ॥
विद्यामासाद्य सद्यो विदधति विबुधाचार्यकस्पर्द्धिभावं ।
हृष्यन्तो यस्य शिष्याः स जयति जगति श्रीशिवाख्यो द्वितीयः ॥
श्रीमन्नृसिंहसुतवर्यदिवाकराख्यः सत्पद्धतेर्गणककेशवनिर्मितायाः ।
टीकामिमां विविधयुक्तिविशेषरम्यामाज्ञां शिवस्य सुगुरोः कृतवानवाप्य

एवमेवान्तिमश्लोकः

शाके गजाम्भोधिशरेन्दु १५४८ तुल्ये सिद्धान्तवित्प्रौढमनोरमाख्या ।
दिवाकरोक्ता बुधकेशवोक्तेर्वृत्तिः सयुक्तिः समगात् समाप्तिम् ॥

एवं पद्धतिप्रकाश, मकरन्दविवरणम्, केशवीयपद्धतिटीकाप्रौढमनोरमा, इति ग्रन्थत्रयमेतत्कृतमुपलभ्यते सुलभेन । एतत्कृता स्वपद्धतिप्रकाशोपरि सोदाहरणा टीका च गणिततत्त्वचिन्तामणिनाम्ना प्रसिद्धाऽऽयासेन प्राप्यते श्लोकषट्शताऽऽसन्ना । काश्यां मन्मित्रराजाजीज्योतिर्विद्गृहे शुद्धा प्राचीना च मयोपलब्धा ।

यत्रादौ

कान्तं नितान्तं शिवपादयुग्मं चित्ते निधायाऽथ दिवाकराख्यः ।
सच्छिष्यतोषाय निजप्रणीतं ग्रन्थं वरेण्यं विवरीवरीति ॥

अन्ते

दिवाकराऽऽराधनलब्धबुद्धिर्दिवाकराख्यो नरसिंहसूनुः ।
रम्यं निजोक्तेर्गणितस्य तत्त्वचिन्तामणिं संरचयांबभूव ॥
यन्मयाऽत्र समकारि कुत्रचित् त्वेकदेशिमतखण्डनं वरम् ।
सच्छिवस्य सुगुरोर्दयाभरालोकनप्रभववैभवं किल ॥
योगो रूपयुतोऽर्द्धितो भवति भं सैकं यमाभ्यां हृतं
मासः स्याच्छशिहीनितोऽग्निविहृतो वारो भवेत्तद्दलम् ।
स्यात्पक्षः सतिथिर्युतिर्वसु*गुणै३८रेषा हताङ्काश्विर२९युक्

* पुस्तके शशिगुणैरिति पाठः प्रामादिकस्तस्मादालापो न घटते ।

शाकः सर्वयुतिर्यदा नृपशती रामैर्विहीना१५६७ तदा ॥
सिद्धान्तसिद्धान्तविदग्रगण्यो दिवाकरो ग्रन्थमिमं लिलेख ।
यः शाकमत्राऽऽनयति द्विजेन्द्रो मन्यामहे बीजविदां वरं तम् ॥
आक्रान्ता तनुवटुना जगत्त्रयीयं निर्वीर्यो मणिशकलेन जायतेऽग्निः ।
आचान्तः कलशभुवा सवाडवोऽब्धिर्दुर्ज्ञाना खलु विदुषां जनेन शक्तिः ॥

अत्र पक्षस्य मानं यदि रूपं तदाऽऽलापो घटते । ततः यो = २५ । भं = १३ । मा = ७ । वा = २ । प = १ । शाकः = ( यो + १५ ) ३८ + २९ = ( २५ + १५ ) ३८ + २९ = ४० + ३८ + २९ = १५२० + २९ = १५४९ । सर्वयुतिः = १५६७ ॥

## कमलाककरः । १५३८

महाराष्ट्रविप्रो नृसिंहदैवज्ञतनूजो दिवाकरदैवज्ञस्यानुजः शिष्यश्च खवसुतिथिमिते १५८० शके काश्यां सम्प्रति प्रचलितसूर्यसिद्धान्तानुसारं सौरतत्त्वविवेकरूपं सिद्धान्ततत्त्वविवेकं व्यरचयत् । अत्र यावच्छक्यं सूर्यसिद्धान्तमतमण्डनं भास्करमुनीश्वरादीनां खण्डनं च कृतं ग्रन्थकृता । बहुत्र परदूषणाभिलाषेणान्यथैव भास्करकृतोदयान्तरकर्म्मादिखण्डनमस्य गोले गणिते चाद्वितीयपण्डितस्यानेककल्पनाकुशलस्यं न शोभते ।

परे मुनीश्वरविरोधतः कमलाकरेण हठात् पक्षपातधिया बहुत्र भास्करादीनां खण्डनं चक्र इति वदन्ति । यद्यस्य कृतिर्निष्पक्षपातबुद्ध्याऽभविष्यत्तर्हि वस्तुतो रमणीया गोलयुक्तिप्रपञ्चमण्डिता पारसीकनवीनमतभूषिता सर्वजनमान्याऽभविष्यत् । अस्य सिद्धान्ततत्त्वविवेकरूपैकैव कृतिर्यत्र बहवो विशेषा नवीनयुक्तिपूर्णाः शोभन्ते । सिद्धान्ततत्त्वविवेके पूर्वाचार्यप्रकारतो ये विशेषास्ते बनारससंस्कृतसीरिजनाम्नि प्रबन्धे मच्छोधितमुद्रितसिद्धान्ततत्त्वविवेकभूमिकायां द्रष्टव्यास्तत्र भ्रमादस्माभिर्बल्लालगणकात्मजकृष्णदैवज्ञस्य पौत्रः कमलाकरो लिखितो वस्तुतः कमलाकरस्य मूलपुरुषाणां ज्ञानार्थं शिवदैवज्ञवर्णनं विलोक्यम् ।

गोदावर्या उत्तरे देवगिरिनामकं दुर्गमस्ति यत्राक्षांशाः सार्द्धविंशत्यंशाः २०।३०। अस्माद्दुर्गादाग्नेयदिशि षोडशयोजनान्तरे विदर्भदेशान्तर्गता पाथरी नगरी यस्याः पश्चिमभागे सार्द्धद्वि २।३० योजनान्तरे गोदा सरित् संशोभते । अस्याः सौम्यतटे गोलाभिधया ग्रामोऽस्य मूलपुरुषाणां ग्राम इति सर्वं ग्रन्थोपसंहारे कमलाकरेण सम्यग् वर्णितम् ।



ग्रन्थोपसंहारे ७-१४ श्लोकाः

गोदावरीसौम्यतटोपकण्ठगोलाख्यसद्ग्रामसुसिद्धभूमौ ।
विप्रो महाराष्ट्र इति प्रसिद्धो रामो भरद्वाजकुलावतंसः ॥
बभूव तज्जोऽखिलमान्यभट्टाचार्योऽतिशास्त्रे निपुणः पवित्रः ।
सदा मुदा सेवितभर्गसुनुर्दिवाकरस्तत्तनयो बभूव ॥
वेदान्तशास्त्राभ्यसनेन काश्यां यः पुण्यराश्यां तनुमुत्ससर्ज ।
अस्यार्यवर्यस्य दिवाकरस्य श्रीकृष्णदैवज्ञ इति प्रसिद्धः ॥
बभूव पुत्रः सुतरां पवित्रः सत्तीर्थकर्त्ताऽखिलशास्त्रवेत्ता ।
तज्जस्तु सद्गोलविदां वरिष्ठो नृसिंहनामा गणकार्यवन्द्यः ॥
बभूव येनात्र च सौरभाष्यं शिरोमणेर्वार्त्तिकमुत्तमं हि ।
स्वार्थं परार्थं च कृतं त्वपूर्वसद्युक्तियुक्तं ग्रहगोलतत्त्वम् ॥
तज्जस्तु तस्यैव कृपालवेन स्वज्येष्ठसद्बन्धुदिवाकराख्यात् ।
सांवत्सरार्याद्गुरुतः प्रलब्धशास्त्रावबोधो गणकार्यतुष्ट्यै ॥
दृग्गोलजक्षेत्रनवीनयुक्त्या पूर्वोक्तितः श्रीकमलाकराख्यः ।
समस्तसिद्धान्तसुगोलतत्त्वविवेकसंज्ञं किल सौरतत्त्वम् ॥
खनागपञ्चेन्दुशके १५८० व्यतीते सिद्धान्तमार्याभिमतं समग्रम् ।
भागीरथीसौम्यतटोपकण्ठवाराणसीस्थो रचयाम्बभूव ॥

स्वज्येष्ठबन्धोर्गुरोश्च दिवाकरात्कमलाकरो दशवर्षैर्लघुः कल्प्यते तदाऽस्य जन्मशको वसुरामपञ्चेन्दुसमः १५३८ सिध्यति । भारतवर्षे यस्मिन् समयेऽयं गणितज्ञः सिद्धान्ततत्त्वविवेकं व्यरचयत्तदैव यूरपदेशे न्यूटननाम्नो गणकस्य वयः षोडशवर्षसममासीत् ।

सम्प्रति भारतवर्षे सिद्धान्ततत्त्वविवेकग्रन्थ एव सिद्धान्ते सर्वोत्तमोत्तमो ज्योतिर्विद्भिराद्रियते पठ्यते पाठ्यते च । मुनीश्वरकमलाकरयार्विरोधकारणं मुनीश्वरवर्णने विलोक्यम् ।

## रङ्गनाथः । १५६२

अयं नृसिंहदैवज्ञतनूजो निजसहोदराद्दिवाकरात्कमलाकराच्चाधिगतज्यौतिषविद्यो बाहुरसपञ्चेन्दुमिते १५६२ शके सिद्धान्तचूडामणिनामकं करणाकारं ग्रन्थं व्यरचयत् । अत्र गलितफलानयने पूर्णान्तसाधने च ज्ञानराजदैवज्ञमतखण्डनं कृतमस्ति । तथा परिलेखादौ दिवाकरप्रकारप्रशंसा विशेषतो

निरूपिता । अयं ग्रन्थः शतचतुष्कश्लोकनिबद्धो मध्यमाधिकारादिपाताधिकारान्तद्वादशाधिकारात्मकोऽप्रसिद्धो मन्निकटे वर्तते प्रायः शुद्धः । मन्निकटस्थेयं प्रतिरस्य पञ्चपञ्चशरेन्दुशककाले हरदत्तत्रिपाठिना लिखिताऽस्ति । सार्वभौमकास्तुनीश्वरकृतस्पष्टीकरणभङ्गीखण्डनरूपो लघुभङ्गीविभङ्गीनामकश्चैनेन विनिर्मितोऽन्यो ग्रन्थश्चास्माभिः काशिकराजकीयपुस्तकालये दृष्टः । एवमस्य कृतिद्वयमस्मद्दृष्टिगोचरीभूतम् । सिद्धान्तचूडामणिः साम्प्रतकालिकप्रचलितसूर्यसिद्धान्तानुसार एव ।

अस्य समाप्तौ

गोलज्ञविद्वद्युतगोलनाम्नि ग्रामे गुणौघैः प्रथितो बभूव ।
यथार्थनामा शिवलब्धधामा श्रीकृष्णनामा गणकोष्णधामा ॥
तस्मादभूतां तनयौ तदाद्यः श्रीमन्नृसिंहो बुधसेविताङ्घ्रिः ।
ज्योतिर्विदाचार्यपदं प्रयातः स्वधामसंतोषितसुद्द्विजौघः ॥
कविज्ञमार्गादुपरि स्फुरण्यः कविज्ञसंसेवितपार्श्वभागः ।
ज्योतिर्विदां सूर्य इवाग्रगण्यः श्रीसच्चिवाख्यस्तनयो द्वितीयः ॥
श्रीमन्नृसिंहस्य यशोवरिष्ठाः श्रीसूर्यनिष्ठा गुणिनां वरिष्ठाः ।
श्रीमद्भरद्वाजकुलावतंसास्ते सूनवो भूमितले जयन्ति ॥
ज्येष्ठस्तेषु दिवाकरो विजयते सत्संप्रदायाग्रणीः
सिद्धान्ताम्बुजबोधनैकमिहिरो दैवज्ञवाचस्पतिः ।
तर्केऽनल्पमतिः कवित्वकरणे साक्षात्पुराणो मुनि-
र्यस्यात्यन्तमरातिदन्तिदलने शार्दूलविक्रीडितम् ॥
श्रीमानसीमगुणमण्डितपण्डितार्य-
चूडामणिः सुगणितागमचक्रवर्त्ती ।
चण्डांशुचण्डधिषणः कमलाकरोऽन्यः
क्ष्मायां जयत्यखिलपण्डितवन्द्यपादः ॥
कुशाग्रबुद्धिर्गणितागमज्ञगणाग्रणीर्यो गुणिनां वरिष्ठः ।
दिवाकराराधनलब्धतेजाः श्रीगोपिनाथस्तनयस्तृतीयः ॥
तस्यानुजः पण्डितरङ्गनाथः सिद्धान्तचूडामणिनामधेयम् ।
सौरानुसारं सुगमप्रकारं विनिर्ममे दैवविदां हिताय ॥
मासानां कृतिरब्धिहृद्युतिरसौ खाब्जैर्विहीना तिथि-
र्वाणैर्द्वद्विहतोडुवासरमितिर्वाराङ्गभागात्पदम् ।



पक्षः सर्वयुतिः शको द्विखदिनैर्युक्तोऽत्र जानाति य-
स्तस्याव्यक्तविदो नितान्तमपरा दैवज्ञकी मार्ता ॥

अत्र दशमाससंख्यायां सर्व आलापो घटते तदा मा = १० । गु = २५ । ति = १५ । न = ३ । वा = ६ । प = १ सर्वयुतिः = ६० द्विखदिनै १५०२ युक्ता १५६२ जातः शकः ॥

## नित्यानन्दः । १५६१

अयं कुरुक्षेत्रनिकटवर्त्ति-इन्द्रपुरी (इन्द्रप्रस्थपुर) निवासी गौडब्राह्मणो देवदत्ततनूजो भूरसबाणचन्द्र १५६१ मिते शाके सिद्धान्तराजं व्यरचयत् । सायनगणनैव मुख्या, न निरयणगणनेत्येवास्य मतम् । साम्प्रतकालिकं प्रचलितं सूर्यसिद्धान्तं वास्तवं नेत्यस्य मीमांसा तथा सायनगणनैव सर्वदेवर्षिसंमतेत्यस्य च मीमांसा प्रथमाध्याये विस्तरतो वर्णिताऽनेन । मदीया कृती रोमकमतीया रोमकस्तु भगवान् सूर्य एव तदर्थं सूर्यारुणसंवादस्थकथा चेति सर्वं निःशङ्कमुवाचायम् । ग्रन्थस्यावलोकनेन च ग्रन्थरचनाकालिकेन्द्रपुरीस्थयवननृपतिदेशीयपारसीकमतानुसारिणी सायनमानेन सर्वा गणना स्फुटैव ।

अत्र मन्दफलातिरिक्तः पाक्षिकनामकसंस्कारश्च मध्यमरविचन्द्रान्तरखशतश्चन्द्रे देयस्तथाऽनेन विधिना जातश्चन्द्रो विमण्डलस्थो भवति ततः शरसंस्कारेण क्रान्तिवृत्तीयस्फुटचन्द्रः साधनीय इति सर्वं वर्णितमस्ति ।

अत्र मीमांसाध्यायः, मध्यमाधिकारः, स्पष्टाधिकारः, त्रिप्रश्नाधिकारः, चन्द्रग्रहणाधिकारः, सूर्यग्रहणाधिकारः, शृङ्गोन्नत्यधिकारः, भग्रहयुत्यधिकारः, भग्रहाणामुन्नतांशादिसाधनाधिकारः, इति गणिताध्याये नवाधिकाराः सन्ति । स्पष्टाधिकारे रेखागणितप्रथमाध्यायसम्बन्धिन्यो रेखादिपरिभाषाश्च सन्ति । भग्रहयुत्यधिकारे चतुरशीति ८४ तारकाणां ध्रुवकाः शराश्च पठिताः ।

गोलाध्याये, भुवनकोशः, गोलबन्धाधिकारः, यन्त्राधिकारः, यन्त्राधिकारे यन्त्रराजस्य, तुरीययन्त्रस्य, चूडामणियन्त्रस्य, तथा चाबकयन्त्रस्य ( चाबुकयन्त्रस्य ) वर्णनं कृतम् ।

ग्रन्थस्य समाप्तौ स्वकुलवर्णनं विस्तरतः कृतम् ।

तत्रस्थश्लोकाश्च

श्रुतिस्मृतिव्याकरणप्रवीणैर्विशिष्टशिष्टाचरणैकदक्षैः ।
श्रीमत्कुरुक्षेत्रसमीपसंस्था द्विजोत्तमैरिन्द्रपुरी विभाति ॥
तस्यां वसन् गौडकुलप्रसूतोऽनुशासनेनापि डुलीनहट्टः ।
इच्छाभिधो मुद्गलगोत्रजन्मा बभूव पूर्वं सतपा मनीषी ॥
तस्यात्मजः श्रौतविधिप्रयुक्तो वेदान्तशास्त्रादिकपारगामी ।
तपोधनो ज्यौतिषशास्त्रदक्षो विचक्षणो लक्ष्मणसंज्ञकोऽभूत् ॥
तदीयपुत्रस्तपसा वरिष्ठः सदा गरिष्ठो द्विजमण्डलीषु ।
सदा सदाचारयुतो मनीषी नारायणोधर्म्मपरायणोऽभूत् ॥
तस्यात्मजो ज्यौतिषशास्त्रदक्षो विद्याविनोदेषु विलग्नचेताः ।
जितेन्द्रियः सत्यतपः समेतः श्रीदेवदत्तोऽस्ति नरेन्द्रमान्यः ॥
नित्यानन्दस्तस्य पुत्रो द्विजानामाज्ञाकारी सूर्यलब्धप्रसादः ।
षड्गोभूपै १६९६ विक्रमार्कस्य शाके याते चक्रे सर्वसिद्धान्तराजम् ॥

अस्य पुस्तकस्यैका प्रतिः काशिकराजकीयपुस्तकालये वर्त्तते ।

अस्य परम्परात आगतं मूलस्थानं डुलीनहट्टसंज्ञमासीत् यच्च गौड़ानां मध्ये शासननाम्ना प्रसिद्धम् ।

## जगन्नाथो जगन्नाथसम्राट् वा । १५७४

तैलङ्गब्राह्मणो जयपुरनरपतीन्द्रजयसिंहप्रधानपण्डितो जयसिंहमहाराजतो लब्धपण्डितराजोपाधिर्गोलगणितागमानन्योपमधीर्महाराजजयसिंहाज्ञया अरबीभाषीयमिजास्तीनामकज्यौतिषसिद्धान्तग्रन्थस्यानुवादं संस्कृतभाषायां सिद्धान्तसम्राजं कृतवान् ।

अत्र त्रयोदशाध्याया एकचत्वारिंशदधिकशतं १४१ प्रकरणानि षण्णवत्युत्तरशतं १९६ क्षेत्राणि सन्ति । अस्मिन् सिद्धान्तसम्राजि बहूनामरबदेशीयगणितविदां मिर्जा-उलूकवेगादीनां यवनानां ज्योत्पत्तौ वेधादिविषये च प्रकारान्तराणि लिखितानि बहुत्र प्रकारान्तराणां महाराजजयसिंहकृतोपपत्तयश्च सन्ति । अस्यादिमो भागो मया काशिकराजकीयपाठशालीयपुस्तकालये दृष्टस्तत्रादौ मङ्गलानन्तरं ग्रन्थस्याध्यायादिप्रमाणं लिखितमस्ति ।

अस्यादौ

गणाधिपं सुरार्चितं समस्तकामदं नृणाम् ।



प्रशस्तभूतिभूषितं स्मरामि विघ्नवारणम् ॥
लक्ष्मीनृसिंहचरणाम्बुरुहं सुरेशै-
र्वन्द्यं समस्तजनसेवितरेणुवन्द्यम् ।
वाग्देवतां निखिलमोहतमोपहन्त्रीं
वन्दे गुरुं गणितशास्त्रविशारदं च ॥

श्रीगोविन्दसमाह्वयादिविबुधान् वृन्दाटवीनिर्गतान्
यस्तत्रैव निराकुले शुचिमनोभावः स्वभक्त्याऽऽनयत् ।
म्लेच्छात् मानसमुन्नतान् स्वतरसा निर्जित्य भूमण्डले
जीयात् श्रीजयसिंहदेवनृपतिः श्रीराजराजेश्वरः ॥

राजाधिराजो जयसिंहदेवः श्रीमत्स्यदेशाधिपतिश्च सम्राट् ।
श्रीरामपादाम्बुजदत्तचित्तो यज्वा सदा दानरतः सुशीलः ॥
गोलादियन्त्रेषु नवीनयुक्तिप्रचारदक्षो गणितागमज्ञः ।
सत्यप्रियः सत्यरतः कृपालुस्तिग्मप्रतापो जयति क्षमायाम् ॥

स धर्म्मपालो गणितप्रवीणान् ज्योतिर्विदो गोलविचारदक्षान् ।
कारूंस्तथाऽऽहूय चकार वेधं गोलादियन्त्रैर्द्युसदां च भानाम् ॥

ग्रन्थं सिद्धान्तसम्राजं सम्राट् रचयति स्फुटम् ।
तुष्टयै श्रीजयसिंहस्य जगन्नाथाह्वयः कृतो ॥
अरबीभाषया ग्रन्थो मिजास्तीनामकः स्थितः ।
गणकानां सुबोधाय गीर्वाण्या प्रकटीकृतः ॥

अरबीभाषातः संस्कृते जगन्नाथकृतो युक्लेदाख्यग्रन्थास्याप्यनुवादो रेखागणितनाम्ना प्रसिद्धोऽस्ति यत्र पञ्चदशाध्यायाः सन्ति । अस्य गणितस्य रेखागणितमिति नामकरणं प्रथमं जगन्नाथसम्राजैवाकारि । इदं काशिकराजकीयपुस्तकालये सम्पूर्णं प्रायोऽशुद्धं वर्त्तते । जयपुरप्रान्तेऽस्य प्रतयः सुलभेन प्राप्यन्ते । प्रथमाध्यायस्यैकोनत्रिंशप्रतिज्ञोपपत्त्यर्थमत्र नूतनानि ८ प्रतिज्ञान्तराणि सन्ति यानि सम्प्रति प्रचलितयूरपदेशीयरेखागणिते न लिखितानि । एवमत्र प्रथमाध्यायस्य ४७ प्रतिज्ञा १६ प्रकारान्तरैरुपपादिता । अस्य पञ्चदशाध्यायस्य हीन्दीभाषायामनुवादो मदीयच्छात्रेण झोपाख्यश्रीशशिपालशर्म्मणा कृतो मुद्रितश्च वर्त्तते ।

यथेदानीं रेखागणिते साध्यं, वा प्रतिज्ञा लिख्यते तथाऽत्र तत्स्थाने क्षेत्रमिति लिखितमस्ति । रेखागणितमपि जगन्नाथेन जयसिंहमहाराजाज्ञयैवा-

ऽकारि । रेखागणितानुवादेन सिद्धान्तसम्राजा च तुष्टो जयसिंहनृपतिरस्मै पण्डितराजाय जगन्नाथसम्राजे बहून् ग्रामान् ददौ । तद्वंशीया अद्यावधि तल्लब्धग्रामादिना सुखं भुञ्जन्ते ।

इदं रेखागणितं जगन्नाथेन खवेदनृप १६४० शके विरचितम् । अत्र प्रत्यध्यायसमाप्तौ जयसिंहाज्ञयाजगन्नाथेनाकारीति वर्णनं कृतं ग्रन्थकृता यथा पञ्चदशाध्यायसमाप्तौ

श्रीमद्राजाधिराजप्रभुवरजयसिंहस्य तुष्ट्यै द्विजेन्द्रः
श्रीमत्सम्राट् जगन्नाथ इति समभिधारूढितेन प्रणीते ।
ग्रन्थेऽस्मिन् नाम्नि रेखागणित इति सुकोणावबोधप्रदात-
र्यध्यायोऽध्येतृमोहापह इह विरतिं घस्रसंख्यो गतोऽभूत् ॥

अस्य रेखागणितस्य या प्रतिर्जगन्नाथसम्राज आज्ञया नववेदनृपशके १६४९ वा वेदेभसप्तेन्दु १७८४ विक्रमाब्दे लोकमणिनाम्ना लेखकेन लिखिता सैव काशिकराजकीयपुस्तकालये वर्त्तते तत्रान्तिमश्लोकश्च

युगवसुनगभूवर्षे शुचिशुक्ले युगतिथौ रवेर्वारे ।
व्यलिखल्लोकमणिः किल सम्राजामाज्ञया पुस्तम् ॥

रेखागणितस्य प्रधानकर्त्ता युक्लेदो न किन्तु पूर्वमिदं रेखागणितशास्त्रं मिजिप्ट (Egypt) नाम्नि देशे प्रादुर्भूतम् । नीलाख्यनदीतटवर्त्तिक्षेत्रविभागार्थमेतच्छास्त्रमुत्पन्नमिति केषांचिन्मतम् । सेसोस्त्रीस् (Sesostris) संज्ञकनृपेण स्वदेशं खण्डैः खण्डैर्विभज्य तत्र करग्रहणार्थं तत्पतयो नियोजिता एतदर्थमिदं शास्त्रं तत्रत्यैर्गाणितिकैरकारीति हिरोडट्स (Herodotus) नाम्नः प्राचीनवृत्तान्तकर्तुः सम्मतिः । तद्देशीयधर्म्मोपदेशकैरेतच्छास्त्रमुत्पादितमिति सिकन्दरसार्वभौमसभाप्रधानपण्डितस्य आरिस्टोटलाख्यस्य (Aristotle) मतम् ।

शालिवाहनशकात्पूर्वं पञ्चसप्तरस ६७५ वर्षान्तरे मिलिटस् (Miletus) नगरनिवासिना थे*लस (Thales) संज्ञकेनास्य शास्त्रस्यानेके सिद्धान्ताः प्रकाशिताः । अर्द्धवृत्ते जाताः कोणाः समा भवन्तीति तेनैवाऽबोधि । उच्छ्रितपदार्थानामौच्च्यं समुद्रान्तर्गतबृहन्नौकास्थात्तीरान्तरं च तेनाऽऽनीतम् । स्वदेशे चैनेनैकं विद्यामन्दिरं च स्थापितम् ।

* अस्य जन्म प्रायः ख्रीष्टाब्दात्पूर्वं ६४० वर्षे निधनं च नवति ९० वर्षसमे वयसि ।



उच्छ्रितिज्ञानार्थमेवैनेन सम्प्रति प्रसिद्धरेखागणितप्रथमाध्यायस्य ५, १५, २६ प्रतिज्ञाः षष्ठाध्यायस्य २, ४ प्रतिज्ञे च प्रकाशिते । अयं ज्यौतिषसिद्धान्तकर्त्ता चासीत् । एकस्मिन् समये ह्ययं पथि गच्छन्नक्षत्रावलोकनार्थं दत्तोर्ध्वदृष्टिरन्धकूपे पपात । तदा "तव पादतले किमस्तीत्यस्य ज्ञानं यदि ते न तदा खस्थपिण्डज्ञानं कथं भविष्यतीति" कयाचिद्वृद्धयाऽस्योपरिव्यङ्गोक्तिरुक्ता । अस्य निधनान्तरं तच्छात्रः अनाक्सिमेण्डर (Anaximander*) संज्ञस्तदीयपाठशालायां तत्पदं विभूष्य रेखागणितस्य तत्त्वरूपान् कतिपयसिद्धान्तान् भूगोलखगोलाकृतिं पलभायन्त्रं च रचयामास ।

तदनन्तरं अनाक्सेगोरास् (Anaxagoras) नामकस्तत्राध्यापको भूत्वाऽतीवदुरूहं वृत्तवर्गीकरणं (Quadrature of the circle) समुत्पादितवान् ।

थेलस (Thales)संज्ञकस्य द्वितीयश्छात्रः पैथागोरास् (Pythagoras) संज्ञकश्च त्र्यस्रे कोणत्रययोगः समकोणद्वयसमा भवति । जात्यत्रिभुजे भुजकोटिवर्गयोगः कर्णवर्गसमो भवतीति सिद्धान्तमुत्पादयामास । रेखयोर्दृढत्वं ज्ञातवान् । बहूनि सरलपृष्ठघनक्षेत्राणि च कल्पयामास । अयं विद्यासम्पादनाय भारतवर्षमिजिप्टदेशं चाऽगादिति बहूनां विदुषां सम्मतिः । तत इटलीदेशे टारेण्टम् (Tarentum) नगरे स्थित्वा शकात्पूर्वं पञ्चयुग्मरस ६२५ वर्षान्तरे तत्र स्वनामपूर्वकमेकं विद्यामन्दिरं स्थापितवान् ।

पृथिवी स्वाक्षोपरि भ्रमति नक्षत्रगणश्चाचल इत्यस्य मतं दृढमवगम्य तत्रत्या जना भ्रान्तोऽयमिति परस्परं निगदन्तो विना भोजनाच्छादनादिनाऽमुं विद्वांसं पीडितवन्तस्तत्पीडयैवाऽयं पञ्चत्वं च गत इति बहूनां प्राचीनेतिहासवेदिनां मतम् ।

क्रियस् (Chios) नगरनिवासी हेपाक्रेटस ( Hippocrates ) नामा च तस्मिन् देशे द्वितीयो रेखागणितसिद्धान्तकर्त्ताऽऽसीत् । अयं चन्द्रखण्डवर्गीकरणं (Quadrature of the Lune) मध्यमप्रमाणद्वारा निर्दिष्टघनाद् द्विगुणघनकरणप्रकारं च रचयामास । अहो एतादृशस्य गाणितिकस्य कृतिः सम्प्रति लुप्ता ।

शकात्पूर्वं पञ्चसप्ताब्धि ४७५ वर्षान्तरे गणितविद्याविशारदः प्लेटो (Plato) संज्ञक एकं गणितविद्यामन्दिरं स्थापितवान् । तत्रात्या अध्यापका

* अस्य जन्म ६११ ख्री. पू. निधनं च ५४५ ख्री. पू. । थेलस्–अनाक्सिमेण्डरसंज्ञकयोर्मतेन भूमिर्मुकुरोदरसमेति बहूनां मतं प्रायः सत्यमेव ।

निर्दिष्टघनाद् द्विगुणघनज्ञानार्थं कोणस्य तुल्यभागत्रयकरणार्थं चैवाऽनेकान्
रेखागणितसम्बन्धिनः शङ्कुच्छिन्नक्षेत्रसम्बन्धिनश्च सिद्धान्तानुत्पादयामासुः।
प्लेटोनामकपाठालयद्वारस्थः "अत्र रेखागणितज्ञ एव प्रविशेन्नान्य"-

इति लेखो वस्तुतोऽस्यास्मिन् शास्त्रे महोत्सुक्यं प्रकटयति। अथैतत्सम-
कालिक एव टारेण्टम् (Tarentum) नगरनिवासी आर्किटस् (Archy-
tus) नामा पैथागोरास् (Pythagoras) स्थापितपाठालयेऽध्यापकोऽभूत्।
अयं चापि द्वयोरेखयोर्द्वे मध्यप्रमाणे उत्पादयामास नूतनप्रकारेण।

प्लेटो (Plato) संज्ञस्य लियन (Leon) नामाऽन्तेवासी रेखागणित-
शास्त्रं संशोध्य तेन। प्लेटो (Plato) संज्ञस्य सुहृच्च युडाक्सस् (Eudo-
xus) नामा सूचीक्षेत्रपृष्ठफलसाधनं कतिपयवक्राकृतीश्च चकार।

मिनीक्मस् ( Menaechmus ) नामा प्लेटोयुडाक्ससस्संज्ञयोश्छात्रः
शङ्कुच्छिन्नक्षेत्राणि रेखयोर्मध्यप्रमाणद्वयज्ञानार्थं परवलय —(Parabola)
द्वयसम्पाततो दीर्घवृत्तद्वयसम्पाततश्च प्रकारद्वयमुत्पादितवान्।

डिनास्ट्रेटस् (Dinastratus) संज्ञश्च तौर्यिकं वक्रं (Quadratrix)
निर्दिष्टकोणस्य यथेच्छं तुल्यभागकरणाय वृत्तस्य वर्गीकरणाय च कल्पया-
मास। (द्युचरचारनामकं पुस्तकं मत्कृतं विलोक्यम्)।

जीनो (Zeno) डेमांक्रीटस् (Democritus) नामा च व्यक्तगणितं
रेखागणितं च रचयामास। अरिस्तिअस्संज्ञः (Aristaes) युक्लेद् (Eu-
clid) संज्ञकस्य गुरू रेखागणितशास्त्रे महाप्रवीणो घनक्षेत्रविषये शङ्कुच्छिन्न-
क्षेत्रविषये च किञ्चिद्विलिलेख।

शककालात्पूर्वं पञ्चरसराम ३६५ वर्षान्तरे आर्किमिडिज् (Archi-
medes) नामा ऽतिप्रसिद्धो गणितशास्त्रे पटिष्ठोऽभूत्। अयं गोलघनफलं
तद्बहिर्लग्नसमतलमुखशङ्कुघनफलस्य तृतीयांशद्वयेन समं तथा परिधिव्यास-
घातपादसमं वृत्तफलं भवतीत्याद्यनेकान् फलानयनप्रकाशान् स्वधियोत्पा-
दितवान्।

येन क्षेत्रेण मया गोलघनफलं ज्ञातं तत्क्षेत्रं मन्निधनानन्तरं मत्समाध्यु-
परि विलेख्यमिति स्वनिधनसमये आर्किमिडिज्संज्ञकेनाज्ञापितम्। तदनुया-
यिभिस्तदीयाऽऽज्ञया निधनानन्तरं तत्समाध्युपरि तत्क्षेत्रचित्रं च स्थापितं
यदद्यावधि तदीयपाण्डित्यं प्रकटयति।

अथ तदासन्नकाल एव रेखागणितशास्त्रविशारदो युक्लेद (Euclid)
संज्ञोऽभूत्। अस्य जन्मस्थानं न विदितं किन्त्वयं एथेन्स (Athens)



नगरे रेखागणितशास्त्रं समधीत्य ग्रीस (Grees) देशात् समागत्य सिक-
न्दरसार्वभौमस्थापितविद्यामन्दिरेऽध्यापकोऽभूदिति प्रसिद्धः। अनेन गणित-
शास्त्रे बहवो विशेषचमत्कारकरा ग्रन्था ग्रथिता येष्वेको रेखागणितग्रन्थ
एवावशिष्टो यत्र पूर्वाचार्यकृतान् अनेकान् ग्रन्थान् संग्रह्य युक्लेदेन वि-
चितः। सोऽयं ग्रन्थस्तदीयभाषायां प्रसिद्धो जगन्नाथपण्डितेन जयसिंहनर-
पतिसमाज्ञया संस्कृते कृतः।

जयसिंहनरपतिना ग्रहवेधार्थं काश्यामवन्त्यां जयपुरादिषु यानि
यन्त्राणि विनिर्मितानि तेषां रचनाप्रकारश्च सिद्धान्तसम्राजि विस्तरतो
वर्णितः। अयं सिद्धान्तग्रन्थश्च पञ्चाशत्सहस्रश्लोकात्मक इति प्रथाऽस्ति।

सिद्धान्तसम्राजि यथा मिर्जा–उलूकवेगस्य तृतीयांशज्यासाधने प्रथमा-
ध्याये द्वितीयः प्रकारः।

"तत्र कबजद चापं षडंशानां कल्प्यम् । यस्य वृत्तस्येदं चापं तद्वृत्त-
केन्द्रं त कल्पनीयम् । पुनः प्रत्येकं कबचापं बजचापं जदचापमंशद्वयं
कल्पितम् । कब-कज-कद-बज-बद-जद-पूर्णाज्याः संयोज्याः । पुनः कब-
पूर्णाज्याकजपूर्णाज्याकदपूर्णाज्यानां हभफवचिह्नेष्वेद्धं कार्यम् । पुनस्तहरेखा-
तवरेखाः संयोज्याः । एता रेखाः प्रत्येकं तासु पूर्णाज्यासु लम्बरूपा भवि-
ष्यन्ति । पुनः कतरेखाव्यासार्द्धं संयोज्यम् । पुनः अचिह्नेऽर्द्धितं कार्यम् ।
पुनः अचिह्नं केन्द्रं कृत्वा अकव्यासार्द्धेन वृत्तं कार्यम् । तत्र कहतकोणक-
फतकोणकवतकोणाः समकोणाः सन्ति । तद्वृत्तार्द्धमेतद्-हभफवचिह्नेषु
गमिष्यति । पुनः हभफफववतहतरेखाः संयोज्याः । हचिह्नात् हललम्बः कफ-
पूर्णाज्यायां निष्काश्यः । तदा कफपूर्णाज्या लचिह्नेऽर्द्धिता भविष्यति । तत्र
फवरेखया कजभुजकदभुजयोरर्द्धस्थानं कर्त्तितम् । तदा फवरेखा जदरेखा-
याः समानान्तरा भविष्यति ; तस्मात् कजदत्रिभुजकफवत्रिभुजे मिथः
सजातीये भविष्यतः । कव कदस्यार्द्धमस्ति कफ कजस्यार्द्धमस्ति तेन
फव जदस्यार्द्धं भविष्यति । पुनरनेनैव प्रकारेण हफरेखा बजस्यार्द्धं
भविष्यति । कह कवस्यार्द्धमस्त्येव । तस्मात् कहहफफवपूर्णाज्या मिथः
समाना भविष्यन्ति । पुनः अचिह्नात् अलम्बः कफपूर्णाज्यायां नि-
ष्काश्यः । अयं लम्बः कफरेखां लचिह्नेऽर्द्धितां करिष्यति । पुनरयं वर्द्धितः
सन् हचिह्ने लगिष्यति । तस्मात् कहमेकांशज्या यावत्तावन्मिता कल्प्या ।
पुनः कव अंशत्रितयस्य ज्या एतावत्यस्ति ३ । ८ । २४ । ३३ । ५९ । ३४ ।
३८ । १५ यदि कहवर्गः याव १ कतरेखया ६० भाज्यते तदा लब्धिरेका
कला यावद्वर्गस्य भविष्यति । इदं हलप्रमाणमस्ति यथा पूर्वमुपपन्नम् । अस्य
वर्गः $\left(\frac{\text{यावव१}}{\text{६०} \times \text{६०}}\right)$ यावद्वर्गवर्गस्यैका विकला भविष्यति । अयं कहवर्गं शो-
धितः शेषं कलवर्गो भविष्यति । स च $\left(\text{याव १} \frac{\text{यावव१}}{\text{३६००}}\right)$ याव १ यावववि-
कला १ कफवर्गस्य चतुर्थांशः कलावर्गः । तस्मात् कफवर्गः याव ४ यावव-
विकला ४ । पुनः कफहवघातरूपः कफवर्गः कहफवघातरूपकहवर्गस्य हफ-
कवघातस्य च योगेन तुल्योऽस्ति । कफवर्गश्चैतावान् याव १ हफकवघातः
१ वा याव १ या ३ । ८ । २४ । ३३ । ५९ । ३४ । २८ । १५ । अयं द्वितीय-
प्रकारेण कफवर्गः सिद्धः । एतौ समाविति समशोधनार्थं न्यासः

| | |
|---|---|
| यथा याव ४ यावववि कला ४<br>याव१ या ३ । ८ । २४ । ३३ । ५९ । ३४ । २८ । १५ | } अत्र संप्रदायेन<br>शोधने कृते सति |



प्रथमपक्षे याव३ या ३ । ८ । २४ । ३६ । ५९ । ३४ । २८ । १५ द्वितीये
यावविकला ४ अनयोस्त्र्यंशावपि समानौ तस्मात् त्रिभिरपवर्त्तितौ अवशि-
ष्टावेतावपि समानौ याव१ या १ । २ । ४८ । ११ । १९ । ५१ । २९ । २५ ॥
यावविकला१ प्रतिविकला२० पुनरेतौ यावत्तावतापवर्त्तितौ जातौ पक्षौ या१
रू १ । २ । ४८ । ११ । १९ । ५१ । २९ । २५ ॥

यावविकला१ प्रतिविकला २०

यद्यत्र तादृशाङ्को लभ्यते यस्याङ्कस्य पुनः रूपस्य चान्तरं अङ्कघनस्यै-
कविकलाविंशतिप्रतिविकलातुल्यं भवेत् ।

एवमत्र ग्रन्थे यवनानामनेके प्रकारा वर्त्तन्ते ।

यद्यप्यत्र सिद्धान्तसम्राजि वेधादीनां बहवः प्रकारा उपयोगिनः सन्ति
तथाप्यत्र लेखः प्रौढो न ।

औरङ्गजेबसार्वभौमाज्ञया जयसिंहनरपतिर्यदा करसप्तनृप१६७२ खीष्ट-
शकासन्ने शिवाजीनामकेन सह योद्धुं दक्षिणदेशं गतस्तदा प्रत्यागम-
नसमये जगन्नाथं विंशतिवर्षासन्नवयष्कं वेदवेदाङ्गदर्शनशास्त्रपारङ्गतं दृष्ट्वा
पारसीकारवीभाषाध्ययनार्थं स्वदेशमानयत् । अयं च स्वल्पेनैव कालेन
पारसीभाषायां तथारवीभाषायां चातिप्रवीणो जातः । दिल्लीश्वरश्चैतद्विद्यया
सन्तुष्टः स्वसभाप्रधानपिडतत्त्वेनामुं नियुक्तवान् । अयं चापि दिल्लीश्वरसं-
मानेन तोषितो जयसिंहेनासकृत्पार्थितोऽपि पुनर्जयसिंहसभां नाऽभूषयत् ।

"दिल्लीश्वरो वा जगदीश्वरो वा मनोरथान् पूरयितुं समर्थः ।
अन्यैर्वराकैः खलु दीयमानं शाकाय वा स्याल्लवणाय वा स्यात्" ॥

इत्युत्तरं च दत्तवान् । पुनर्जयसिंहमहाराजेन दिल्लीश्वरं सम्प्रार्थ्यायं
स्वदेशं नीतस्ततस्तत्साहाय्येनारवीपारसीभाषालिखिता बहूपयोगिनोऽनेके
ग्रन्थाः संस्कृतभाषायां प्रकाशिताः ।

दिल्लीश्वरसभास्थारवीपारसीविद्भिः "संस्कृतवेत्तारो मद्भाषाभिज्ञा न
भवन्ती" त्यसकृद्व्यङ्गोक्त्या पीडितः किल जयसिंहनरेन्द्रोऽमुं विलक्षणबुद्धि-
सम्पन्नं बहुभाषाज्ञानार्हं विचार्याऽऽनीतवानिति चिराद्भारतवर्षे जनश्रुतिः ।
जयसिंहसभायामागमनसमये यदि जगन्नाथवयो विंशतिवर्षमितं कल्प्यते
तदास्य जन्म शको वेदसप्तपञ्चेन्दु १५७४ समः समायाति ।

अत्र रेखागणितस्य

प्रथमाध्याये ४८। द्वितीयाध्याये १४। तृतीयाध्याये ३७। चतुर्थाध्याये १६। पञ्चमाध्याये २५। षष्ठाध्याये ३३। सप्तमाध्याये ३९। अष्टमाध्याये २५। नवमाध्याये ३८। दशमाध्याये १०९। एकादशाध्याये ४१। द्वादशाध्याये १५। त्रयोदशाध्याये २१। चतुर्दशाध्याये १०। पञ्चदशाध्याये ६। क्षेत्राणि सन्ति।

काशिकराजकीयपाठशालीयपुस्तके ग्रन्थादौ

करं जनार्द्दनं नाम दूरीकृत्य स्वतेजसा।
भ्राजते दुःसहोऽरीणां यथा ग्रैष्मो दिवाकरः॥
नाडीयन्त्रं गोलयन्त्रं दिगंशाख्यं तथैव च।
दक्षिणोद्गभित्तिसंज्ञं वृत्तषष्ठांशकं तथा॥
यन्त्रं सम्राडिति ख्यातं यन्त्राणामुत्तमोत्तमम्।
जयप्रकाशं तद्वच्च सर्वयन्त्रशिखामणि॥

इति श्लोका अधिकाश्च सन्ति सिद्धान्तसम्राजि॥

सिद्धान्तसम्राजि रेखागणिते च बहुत्र प्रतिज्ञास्थाने शकलानि लिखितानि सन्ति।

## शङ्करः। १६४८

अयं वसिष्ठगोत्रो रैवतिकाचलप्रान्तवासी शुकभट्टात्मजो वसुवसुरसचन्द्रसंमिते १६८८ शके वैष्णवकरणं व्यधात्।

यद्यपि ग्रन्थादौ "श्रीविष्णुगुप्तस्य मतानुसारं सारं प्रकुर्वे" इत्यादि लेखस्तथापि सर्वं करणं भास्कराचार्यमतानुसारं पूर्वाचार्यकरणप्रक्रियावदस्ति। अत्र

"स्थूलं कृतं भानयनं यदेतज्ज्योतिर्विदां संव्यवहारहेतोः।
सूक्ष्मं प्रवक्ष्येऽथ मुनिप्रणीतं विवाहयात्रादिफलप्रसिद्ध्यै"॥

इति भास्कराचार्योक्तदिशा सूक्ष्मनक्षत्रानयनं च कृतम्।



अस्यान्ते

आसीद्रैवतिकाचले गिरिवरे वासिष्ठगोत्रोद्भवः
ख्यातश्चारुगुणाकरैर्हरिहरो रामाभिधस्तत्सुतः।
तत्पुत्रो हि धनेश्वरः सुकृतिवान् तज्ज्ञः शुकाख्यः सुधी-
स्तत्सूनुः करणं हि वैष्णवमिदं चक्रे कविः शङ्करः॥

अयं श्लोको भास्करकृतगोलाध्यायान्तश्लोकप्रतिविम्बरूपः।

एवमत्र करणे वाणाब्धिवेद ४४५ मिते शकेऽयनांशाभाव इति लिखितम्। ग्रन्थसंख्या च श्लोकशतत्रयासन्ना। "गजभुजङ्गमभूपवियुक्शको रविगुणो मधुतो गतमासयुगि" त्याद्यहर्गणानयनेन करणारम्भशको ज्ञायते।

यथा सर्वे ग्रहा दृक्तुल्यतां प्रयान्ति तथात्र करणे विषयः सन्ति इति मध्यमाधिकारस्य विंशतिश्लोके शङ्करेणात्र लिखितं परन्तु ग्रन्थस्यावलोकनेन पूर्वाचार्येभ्यो न कश्चिद्विशेषः प्रतिभाति। ग्रन्थरचनाकालेऽस्य वयश्चत्वारिंशद्वर्षसमं चेत्तदास्य जन्मशकोऽष्टवेदनृप १६४८ सम आयाति।

## शिवलालपाठकः। १६५६

सरयूपारीणब्राह्मणः सोनौरापाठकः कश्यपगोत्रः काश्यामसीसङ्गमनिकटनिवासी त्रिस्कन्धज्यौतिषशास्त्रपारङ्गमः पुराणेतिहासतत्त्ववेत्ता तन्त्रविद्यैककुशलः खल्वासीत्। अस्यैव तनयो रामानन्दपाठकः पुरा काशिकराजकीयप्रधानपाठशालायां सर्वपण्डितप्रधानत्वेन नियुक्त आसीत्। रामानन्दपाठको यदा पाठशालायां नियुक्तोऽभूत्तस्मिन् क्षण एवायं पुत्रार्जिताङ्गलधनधान्याशनभिया गृहं त्यक्त्वा सीतारामचरणसरोरुहार्पितचित्तो विरक्तोऽभूत्।

ज्यौतिषे यद्यप्ययं त्रिस्कन्धविद्याचतुरस्तथापि वास्तुविद्यायामस्य महती प्रसिद्धिः। अयं वास्तुविद्यां सङ्गीतविद्यारसिकः सङ्गीतविद्याकुशलस्य कस्यचिद्यवनबालकस्य गानेन सन्तुष्टस्तमपाठयत्। यद्वंशीया अद्यावधि काश्यां कर्णघण्टासविधे शिल्पचतुरा वास्तुप्रवीणाश्च राजन्ति।

वाल्मीकिरामायणोपरि सुन्दरी टीका च कृता पाठकेन। गोस्वामितुलसीदासकृतहिन्दीभाषाग्रन्थेष्वप्यस्य महती प्रीतिरासीत्। एतच्छोधिता तुलसीदासकृतविनयपत्रिका च काश्यां ज्योतिर्विद्वरश्यामाचरणशर्म्मगेहे मया दृष्टा यदन्ते पाठककृतः

"शोधिता शिवलालेन भूबाणवसुचन्द्रके १८५१ ।
वर्षे गीतावलिरियं श्रीसीतारामतुष्टये" ॥

श्लोकोऽयं वर्त्तते । अस्य निधनसमयो न ज्ञायते । विनयपत्रिकाशोधन-काले नृपसप्तेन्दु १७१६ शके यद्यस्य वयः षष्टिवर्षासन्नं कल्प्यते तदा जन्म-शको रसशररसेन्दु १६५६ समः समायाति ।

भारतवर्षेऽयमतीव प्रख्यातो विविधविद्यातत्त्वकुशलः सिद्धरूपश्चासीदिति सर्वत्र वृद्धेभ्यः श्रूयते ।

## परमानन्दपाठकः । १६७०

अयं सारस्वतब्राह्मणो यद्यपि ज्यौतिषस्कन्धत्रये विलक्षणः सभारञ्ज-नगुणास्तथाप्यस्य फलिते महती प्रसिद्धिरासीत् । जन्मकुण्डलीस्थद्वादश-भावादीनां सम्यक् शुभाशुभफलज्ञानार्थमेनेन महता परिश्रमेण प्राचीनमता-न्यवलम्ब्य वस्तुत आदरणीया प्रश्नमाणिक्यमालाख्या कृतिरकारि । अत्रा-न्ये च प्रश्नसम्बन्धिनो बहवो विशेषा भागचतुष्टयेन वर्त्तन्ते । परमानन्देन भागत्रयमेव विरचितम् । ततस्तस्मिन् दिवं गते तद्वंशीयेनोमापतिशर्म्मणा चतुर्थं भागं विरचय्य तदीया कृतिः पूर्णीकृतेति वृद्धेभ्यः श्रूयते । अयं काशिराजमहाराजबलवन्तसिंहवीरपुङ्गवसभामण्डनप्रधानगणक आसीत् तेन तन्महाराजसमय एवास्य समयः खसप्तरसेन्दुमितशकः स्फुटः । अस्य काचि-दन्या कृतिर्नोपलभ्यते । अस्माभिरेतन्निर्मितपञ्चाङ्गं फलादेशीयबहुविषयभू-षितं काश्यां सारस्वतविश्वनाथाग्निहोत्रिगृहे दृष्टम्

## लक्ष्मीपतिः । १६७०

अयं पर्वतीयो ब्राह्मणः काश्यां सिद्धान्तविद्याप्रचारकः शिवलालदुर्गा-शङ्करपाठकादीनां गुरुर्ज्यौतिषसिद्धान्ते पाटीबीजयोश्चातिप्रगल्भ आसीत् ।

अस्य बीजे चानेकप्रकारा बहुत्रोपलभ्यन्ते । यथा करणीनां लाघवेन योगान्तरार्थमेतद्विरचितं सूत्रम् ।

"आदौ करण्योऽप्यपवर्त्तनीयास्तथा यथा स्युः कृतयः क्रमेण ।
तन्मूलयुत्यन्तरवर्गनिघ्नो युत्यन्तरे स्तोऽप्यपवर्त्तनाङ्क." ॥

इति वस्तुतस्तत्समये प्रशंसनीयम् । काश्यां लक्ष्मीपतिसमयादेव फलि-तविद्याया ह्रासः सिद्धान्तविद्यायाश्च वृद्धिरभूत् । अहो येषां छात्रा



दिगन्तप्रसिद्धाः सिद्धान्तविद्यैकमानिनः कृष्णदेवशिवलालदुर्गाशङ्करपाठका-दय आसन् तद्बहुवर्णनमनावश्यकमेव मन्ये । अयं बबुआज्योतिर्वित्समका-लिकः । यथा बबुआज्योतिर्विदः फलितेऽपूर्वा प्रसिद्धिरासीत्तथैवाऽस्य सर्व-गणकमान्यस्य सिद्धान्ते । अस्य जन्मशकः खसप्तरसेन्दु १६७० समासन्नो हि सम्प्रति वर्त्तमानवृद्धजनेभ्यः श्रूयते निधनसमयश्च द्विवेदसप्तेन्दु १७४२ मितशकः । जानथन डंक्यान् ( Jonathan Duncan, the Resident of Benares ) साहिबेन रूपनन्दसप्तेन्दु १७९१ खीष्टशके अक्टोबरमा-सस्य २८ दिवसे काश्यां स्वप्रबन्धेन यदा काशि*राजकीयप्रधानपाठशाला स्थापिता तदाऽयं लक्ष्मीपतिस्तत्पाठशालायां प्रधानगणितशास्त्राध्यापक-आसीत् ( See p. 12 of Sketch † of the Rise and Progress of the Benares Páthasálá. )

## बबुआज्यौतिषी । १६७८

काशीस्थो महाराष्ट्रब्राह्मणो बहूनां मते सिद्धान्ततत्त्वविवेककारकमला-करवंशीयो यद्यपि ज्यौतिषस्कन्धत्रयेऽद्वितीयः पण्डितस्तथापि काश्यां फलितेऽस्य महती प्रसिद्धिरासीत् । अवधनृपति-आसफउलदौलानाम्नः पुत्रो मिर्जाअलीनामा यश्च वजीर-अलीनाम्ना प्रसिद्धो यदा नवनवसप्तेन्दु १७९९ खीष्टशके जनवरीमासस्य १४ दिने चेरीसाहिबं व्यापादयामास तदा बबुआ-ज्योतिर्विन्मुहूर्त्तबलेनैव स्वराज्यप्राप्त्यर्थं बृटिशगवर्नमेण्टतो योद्धुं प्रवृत्तः । अयं शत्रुभिया मुहूर्त्तसमयतः पूर्वमेव योद्धुं प्रवृत्तस्तेनैव हेतुना काश्यामस्य सपादैकप्रहरमात्रं राज्यमासीत् सम्यक् मुहूर्त्तपालनेनायं सार्वदिको राजाऽभ-विष्यदिति काश्यां चिराज्जनश्रुतिः । वजीर-अलीमुहूर्त्तदानसमयादेव राज-प्रतिबन्धजनेभ्यः काशीस्थेभ्यो राज्यार्थं यात्रामुहूर्त्तो भवद्भिर्न देय इति भृशं बृटिशगवर्नमेण्टेनाऽऽज्ञापितोऽयं जातः ।

बृटिशगवर्नमेण्टप्रतिबन्धतः काशीं निवसतो नयपालमहाराजस्यापि यात्रामुहूर्त्तोऽनेन दत्तो यद्बलेन स महाराजः सुखेन नयपालं प्राप्य प्रतिबन्ध-मुक्तोऽभूत् । स तत्र गत्वाऽसकृत्स्वदेशागमनार्थं तं ज्योतिर्विदं प्रार्थयामास

* तस्मिन् समय इयं पाठशाला काश्यां कर्णघण्टानामकप्रदेशे भूतभैरवनिकट आसीत् । अद्यावधीदं स्थानं वर्त्तते ।

† It is not printed. MS. is kept in Benares College Library.

पत्रादिना परन्तु स काशीं विहाय न गतवान् पश्चात्तत्पुत्रो जयरामशर्म्मा तत्र गत्वा द्रव्यादिना बहादरसम्मानं चाऽऽसादितवान् ।

बबुआज्यौतिषी खलूच्छिष्टगणपतिमुपास्य विलक्षणां सिद्धिं प्राप्तोद्य-द्बलेनैव तस्य मुहूर्त्तादिकं सर्वदा सत्यरूपमिति परम्परातः श्रूयते । अयं च स्वगृहहर्म्याद्धो नागतः सर्वदा तदुपरि तिष्ठन्नेवास्ते । मुहूर्त्तदानसमये मुहूर्त्ता-र्थमागताद्धो बहिः स्थिताज्जनाद्गवाक्षद्वारा रज्ज्ववलम्बितपात्रेण धनमादाय स्वल्पाधिकधनानुसारेण सामान्योत्तममुहूर्त्तान् ददाति स्म । यात्रामुहूर्त्तविषये-ऽस्य महती प्रशंसा प्रथिताऽस्ति ।

यथा काशीस्थः कश्चिद्दीनयवनो धनार्जनार्थं परदेशं जिगमिषुर्मुद्राद्वयेन बबुआज्योतिर्विदो मुहूर्त्तं गृहीतवान् । मुहूर्त्तविश्वासी स मुहूर्त्तसमय एव प्रस्थितः क्रोशदशकं गत्वा तस्थौ । तत्र ज्वरवेदनादुःखितः सप्तदिनान्युपोष्य निधनशङ्कयाऽऽकुलो मुद्राचतुष्टयेनैकां कृशामश्वतरीं जीर्णपर्याणोपेतां क्रीत्वा तत्रोपरि स्थित्वा कथमपि महता क्लेशेन स्वगृहं प्रत्यागतः । मासद्वयेन निवृत्तज्वरो जातबलो लगुडं गृहीत्वा शनैः शनैर्ज्यौतिषिगृहमधिगत्य मुहूर्त्त-निन्दां कर्त्तुमारभत । ज्योतिर्विच्च जातविस्मयो यात्रायां किमुपार्जितं भवते-त्यवोचत् । जीर्णपर्याणोपेता कृशैकाऽश्वतरी क्रीता सापि दिवंगतेति क्रोध-विस्फुरितेक्षणो यवनोऽवदत् । तज्जीर्णपर्याणमेवानयेत्युक्तो ज्योतिर्विदा स सहसा पर्याणं गृहादानीय ज्योतिर्विदभिमुखे छिन्नभिन्नमकरोत् । छिन्ने पर्याणे च स्वर्णमुद्राशतद्वयं युगपत्तत्र दृष्ट्वा विस्मयापन्नो विनयेन स्वर्ण-मुद्रादशकेन च तं ज्योतिर्विदं सम्पूज्य बहु संस्तुत्य च सानन्दं सदनं ययौ एवमनेकधा ।

अस्य निधनशकश्चाष्टाग्निसप्तेन्दुसमासन्न १७३८ स्तदाऽस्य वयः षष्टिवर्षमितं चेत्तदा जन्मशकोऽष्टसप्तरसेन्दुमितः समायाति । अयमुदित-नारायणसिंहवीरपुङ्गवात्काशिराजात् वृत्तिं च लब्धवान् याऽद्यावधि तद्वंशे वर्त्तते* ।

## मथुरानाथशुक्लः । १६८०

अयं मालवीयब्राह्मणो ज्यौतिषसिद्धान्तविद्याचतुरः पारसीकभाषाप्रवीणो

* एतदासन्नसमय एव काश्यामतीव प्रसिद्धो वामोपासकः फलितप्रवीणश्चिन्तामण्युपाध्यायः सरयूपारीणब्राह्मणो लक्ष्मण (लखनी) पुराधिपतियवननृपतितो लब्धबहादरश्चासोद्यद्वंशीया अद्यावधि काश्यां तल्लब्धग्रामादिना सुखं भुञ्जते ।



यन्त्रराजघटनाद्यनेकग्रन्थकर्त्ताऽसीत् । पुराऽयं काशिकराजकीयप्रधानपाठ-शालायां विश्वधृति १८१३ ख्रीष्टशके पुस्तकालयाध्यक्षत्वेन नियुक्तः । यन्त्रराजघटनारूपाऽस्य कृतिः काश्यां पाठशालापुस्तकालयस्था वस्तुतः प्रकटयति विशिष्टं पाण्डित्यमस्य । अस्य निधनं च धृति-धृति १८१८ ख्री-ष्टशके दिसेम्बरमासेऽभूत् । ततोऽस्य पुत्रो यदुनाथशर्म्मा पुस्तकालयाध्यक्ष-स्ततो बेचनरामत्रिपाठी ततो यदुनाथशर्म्मणस्तनयो रमानाथशर्म्मा ततो ढुण्ढिराजशास्त्री ततोऽहम् । सम्प्रति विन्ध्येश्वरीप्रसादद्विवेदी पुस्तकालया-ध्यक्षपदमलं करोति इति पुस्तकालयाध्यक्षव्यवस्था ।

निधनसमये मथुरानाथशुक्लस्य वयश्चेत् षष्टिवर्षसमं कल्प्यते तदाऽस्य जन्मशकः खाष्टनृप १६८० समः समायाति ।

यन्त्रराजघटनानामकपुस्तकं मथुरानाथेन वेदाभ्रसप्तेन्दु १७०४ शके सम्प्रति राजपदवीमलङ्कुर्वतः शिवप्रसादमहाशयस्य पितामहस्य दयालु-चन्द्रनृपते (राज्ञाडालचन्द) राज्ञयाऽकारि । इदं पुस्तकं यन्त्रराजनिर्माण-पद्धतिरूपं सहस्रश्लोकासन्नमस्ति ।

अस्य ३श्लोकः

कथं नु मम चेतसि स्थगितमेधसि स्थीयतां
सुखेन यदबाधितोऽम्बुधिरिवेदमावर्द्धताम् ।
कलाकुलविशारदः स्वकरपूरिताशः श्रिया
भवेन्न यदि नोदनो नृपदयालुचन्द्रः प्रभुः ॥

अन्ते

श्रीयन्त्रराजघटनाविधिरेष काश्यामीशप्रयोजितधिया मथुरेश्वरेण ।
श्रीमद्गुरुस्वपदरेणुवराञ्जनेन कालापरोक्षमतिना रुचिरो व्यधायि ॥
तन्त्रान्तरीयबहुलश्रमखेदभाजः सौकर्यतः सकलकालकलावबुद्ध्यै ।
तन्वन्तु सम्यगवलोक्य तु यन्त्रराजं तोषं ततस्समुपयात्विह कालकालः ॥

नक्षत्रस्थापनविधौ "तानि च नभस्यसङ्ख्ये यानि तत्र यवनाचार्यवर्यैः परिस्फुटानि द्वाविंशदुत्तरसहस्रमितानि नक्षत्राणि १०२२ विद्धानि तानि च जीचाभिधे तदीयसर्वग्रहर्क्षगणितसारणीग्रन्थे सशराणि स्पष्टानि वर्त्तन्ते तेषु यथासम्भवं प्रतिराशीयानि कतिपयानि श्रुत्यभ्रनगेन्दु १७०४ परिमितैत-

द्ग्रन्थशकाब्दकालिकानि स्पष्टराश्यंशयुतानि साभिधानि संगृह्यन्ते'' इति
लेखेन ग्रन्थारम्भशको विज्ञायते ।

## परमसुखोपाध्यायः । १६९०

सीतारामोपाध्यायसुतः इटावामण्डलान्तर्गतग्रामनिवासी सनाढ्यब्राह्मण
आसीत् । पतिनिधनशोकातुराऽस्य जननी सप्तदशवर्षवयस्कममुं काशीमान-
यत् । काश्यां चायमधीतज्यौतिषविद्योऽचिरेणैव कालेन परमप्रसिद्धोऽभूत् ।
फलितेऽस्य प्रसिद्धिं साधुजनेभ्यो निशम्य रीवांनगरपतिना श्रीविश्वनाथसिंह-
तातेन सन्तानार्थमुचितानुष्ठानार्थमयमाहूतः । एतदनुष्ठानविधिना विश्वनाथ-
सिंहस्य जन्माभूत् । विश्वनाथसिंहतातश्च पुत्रोद्भवसुखानुभवहृष्टोऽस्मै वहुन्
मातङ्गान् तुरङ्गमादींश्च लक्षमुद्रादक्षिणोपेतान् 'ददौ । अयमपि महानुदारः
सर्वं तत्र लब्धं धनं प्रयागे दीनजनेभ्यो विभज्य प्रादात् स्वयं च यथा गतः
सुखेन तथैव काशीं प्रत्यागतः ।

अयं फलितपण्डितः फलितग्रन्थरसिको लघुपाराशर्या''स्त्रिकोणकेन्द्रने-
तारा''वित्यादिश्लोकस्य वास्तवान्वयज्ञानार्थं कर्णाटकदेशादागतस्यातिवृद्धस्य
ज्यौतिषशास्त्रकुशलस्यैकपुत्रां पत्नीं तत्पुत्राय स्वर्णकटकदानेन सन्तोष्य
तत्पुत्राध्यापनसमये तत्पत्नीकृपया प्रच्छन्नरूपेण स्थितः । निजपुत्राध्यापन-
समये द्रागन्वयकृतो वृद्धपण्डितस्य तच्छ्लोकविषये यद्यपि कृतबहुपरि-
श्रमो दत्तबहुमूल्यस्वर्णकटकस्तस्मिन् समयेऽभिप्रायं नाऽजानत् तथापि
पञ्चगङ्गास्थले गङ्गायां निमज्जतोऽस्य वृद्धपण्डितस्य मुखात् "यदि तच्छ्लो-
कस्य वास्तवमन्वयं भवान् न करिष्यति तर्हि भवतः काशिवासफलं नष्टं
भविष्यती''ति शपथेन ज्ञात्वा मुमुदे ।

एवं बांसबरैलीप्रान्तादागतं कमपि पण्डितं स्वगेहे निमन्त्र्य रत्नभूषितां
बहुमूल्यां स्वर्णमुद्रिकां च दत्त्वा पश्चात्तद्देशं च गत्वा वस्त्रादिना तत्कुटुम्बं
च सन्तोष्य "तत्कालमिन्दुसहितो द्विरसांशको य" इतिवराहमिहिरकृतबृह-
ज्जातकश्लोकेनाऽनुपातद्वयेन प्रसवकालज्ञानं कथं भवतीति ज्ञातवान् । अयं
स्वोदारप्रकृत्या निरभिमानतया प्रसिद्धो यशस्वी चाभवत् । वस्तुतो नायं
त्रिस्कन्धज्यौतिषविद्याकुशलः । षष्टिसप्तेन्दु १७६० शालिवाहनशकेऽयं
पञ्चत्वं गतो निधनसमये च सप्ततिवर्षवयस्क आसीदिति वृद्धेभ्यः श्रूयते
तेनास्य जन्मशकः खनवनृपासन्न १६९० समायाति ।



## बालकृष्णज्योतिषी । १६९२

बबुआज्योतिर्विदः सोदरभ्राता सेवारामज्योतिर्विद्गुरुर्व्याकरणे ज्यौतिष-
स्कन्धत्रये च पटिष्ठः काशिराजश्रीमदुदितनारायणसिंहवीरपुङ्गवसभाप्रधान-
पण्डित आसीत् । बबुआज्योतिर्विदः सर्वाणि बाह्यकर्म्माणि यथावदयमेव
सम्पादयति स्म । अस्यानेके छात्रा देशान्तरेषु विख्यातयशस आसन् ।
यद्यप्यस्य काचित्कृतिर्ज्यौतिषे प्रसिद्धा नास्ति 'तथापि काश्यां वृद्धाः सम्प्रति
वर्त्तमाना अस्य विलक्षणं पाण्डित्यं ज्यौतिषे व्याकरणे काव्यसाहित्ययोश्च
वदन्ति । अस्य निधनसमयः कराक्षागेन्दु १७५२ शकासन्नः । निधनसमये-
ऽस्य षष्टिवर्षसमं वयः कल्प्यते तदा जन्मशकः करनवरसेन्दु १६९२ समः
समायाति ।

## कृष्णदेवः । १६९७

लक्ष्मीपतिपुत्रस्तातादधीतज्यौतिषविद्यः काशिकराजकीयप्रधानसंस्कृत-
पाठशालायां ज्यौतिषशास्त्रस्य प्रधानाध्यापक आसीत् । ( इयं प्रधानपाठशा-
ला तदा काश्यां भूतभैरवसन्निकट आसीत् ) अयं च गणिते गोलविद्यायां
चातिप्रगल्भ इति श्रूयते परन्त्वेतन्निर्मिता काचित्कृतिर्नोपलभ्यते । अस्य
निधनसमयो युग्मनन्दवसुवसुमतीविक्रमाब्दः सप्तपञ्चसप्तेन्दु * १७५७ शक-
श्चात्रत्येभ्यस्तदीयकालेऽध्येतृभ्योऽधुना जराजर्जरितेभ्यः श्रूयते । निधनस-
मयेचास्यावस्था षष्टिवर्षासन्नाऽऽसीदित्यपि तेभ्यो ज्ञात्वा तदाऽस्य जन्मशकः
सप्तनवरसेन्दुमितः १६९७ सिध्यति । काशिकराजकीयप्रधानपाठशालाका-
र्यसम्पादकैः सभ्यैरयं नखधृति १८२० मिते ख्रीष्टशके मई मासस्य २६
दिवसे पाठशालायां प्रधानगणितशास्त्राध्यापकपदे नियुक्तस्तदैव तैर्वीरेश्वर-
शर्म्मा च द्वितीयगणितशास्त्राध्यापकत्वेन नियुक्तः ।

## शिवदैवज्ञः । १७००

महादेवसुतो विश्वामित्रगोत्रो गणेशदैवज्ञकृतग्रहलाघवानुसारेण सप्त-
त्रिसप्तेन्दुमिते १७३७ शके तिथिसाधनरूपं तिथिपारिजातं समकार्षीत् ।
अत्रैका सारणी च तिथिसहायिनी वर्त्तते । अस्य लक्ष्मेश्वरनामकवसति-
रस्ति । एतत्सर्वं तत्रैव तिथिपारिजाते श्लोकशतासन्ने शिवेन स्वयं लिखि-

* निधनसमयः सत्य एव प्राचीनपाठशालास्थितिवर्णनानुसारेण ।
( See Sketch of the Rise and Progress of the Benares Patha Sala p. 146, 271 )

तम् । ग्रन्थावलोकनेन न कश्चिद्विशेषो वस्तुतो ग्रहलाघवकारतिथिचिन्तामणिवत् हारादिभ्यस्तिथिसाधनं वर्त्तते । ग्रन्थकृतोऽन्या कृतिरस्माभिर्न दृष्टा गणितेऽपि विशेषरूपेणास्य पाटवं न विभाति । कदाचित्फलिते कौशलं भवेत्तच्चैतत्कृतफलग्रन्थविलोकनमन्तरा वक्तुं न शक्यते । तिथिपारिजातस्य सारणीसहितं पुस्तकं काश्यां श्रीरामचन्द्रदीक्षितस्य जड़े इत्युपनाम्नो गेहे वर्त्तते । रचनाकालेऽस्य वयश्चेत्सप्तत्रिंशद्वर्षसमं कल्प्यते तदास्य जन्मशकः सप्तदशशतसमः १७०० समायाति ।

## दुर्गाशंकरपाठकः । १७०९

काशीस्थः शिवलालपाठकानुजो लक्ष्मीपतेः स्वभ्रातुश्चाधीतज्यौतिषव्याकरणकाव्यसाहित्यतन्त्रविद्य औदीच्यब्राह्मणः स्वसमये जगतां गुरुरासीत् । अस्य शिष्यो ज्योतिर्विल्लज्जाशङ्करशर्म्मा काशिकराजकीयप्रधानपाठशालायां प्रधानगणितशास्त्राध्यापकस्तथा हीरानन्दचतुर्वेदश्च तत्रैव प्रधानकाव्यसाहित्याध्यापक आसीत् । लाहोरनृपतिरणजितसिंहनिधनानन्तरमेतन्मुहूर्त्तेन खड्गसिंहः सिंहासनमध्यरोहत् । तदनन्तरमेनेन नवनिहालसिंहस्य जन्म * पत्रं विचित्रचित्रखचितं बहुविशेषविस्तृतं विरचितं यदीयरचनया जातहर्षो लाहोरनरपतिरस्मै लक्षमुद्रासन्नधनानि ददौ ।

स्वपुत्रविवाहे सिहोरनगरगतेन दुर्गाशङ्करपाठकेन सह एजेण्ट विल्किन्सनसाहिबस्य समागमो जातः । समागमे पुराणज्यौतिषयोर्मते विरोधो भवतीत्यत्रोभयोर्महान् संलापोऽभूत्तत्र "ज्यौतिषपुराणयोरविरोधप्रकाशको ग्रन्थो नीलकण्ठरचितो मत्सविधे वर्त्तते" इति पाठकेन कथितः काशीमागत्य तन्महाशयसविधे स ग्रन्थश्च प्रेषितः । एजेण्टसाहिबेनायं ग्रन्थः पाठकनिर्मित इति बुद्ध्वा तत्रत्यपण्डितसाहाय्येन तन्मतं संखण्ड्य

* इदं जन्मपत्रं काशीस्थछन्नूलालवकीलद्वारा पोर्टरसाहिबेन गृहीतं तत्पत्नी च सम्प्रति तन्नीत्वा स्वदेशं गतवती । नवनिहालसिंहस्याकस्मान्मृत्युना तत्राऽसूचितेन तदनादरः पाठकानादरश्च पश्चान्महाञ्जातो लाहोरनगरे यत्रत्यजनैर्जन्मपत्रस्थमिथ्यालेखकारणक्रुद्धैः पाठकस्य मृत्युभयमुपस्थितं परन्तु लहनासिंहेन तत्र कोटाधीशेन रक्षितो बहुना काठिन्येन काशीमुपागमत्पाठक इति श्रूयते ।

† वस्तुतस्तत्र पाठकेन पुराणमतपक्षो मण्डितस्तत्पुष्ट्यर्थमेव नीलकण्ठकृतं पुस्तकं प्रेषितमन्यथा पुस्तकप्रेषणमनावश्यकम् । पुस्तकप्रेषणे तत्खण्डनं पाठकसविधे प्रेषणमुचितमेवातो विलकिनसन्साहिबेनोचितं कृतमिति मन्मतम् ।



तदवलोकनार्थं ज्यौतिर्विल्लज्जाशङ्करद्वारा तत्खण्डनं च प्रेषितम् । पाठकेन तदुत्तरपत्रं यल्लिखितं तत् एजेण्टसाहिबद्वारा सेवारामशर्म्मणा लब्धं सम्प्रति सेवारामसूनुसिद्धेश्वरगृहे मया तत्पत्रं दृष्टं तत्रत्यलेखश्च

स्वस्ति श्रीमत्सकलभूपालमौलिमुकुटमणिदीपनीराजितचरणसरोरुहश्रीलान्सिलट्विल्किन्सन्साहेबप्रभुवर्य्येषु दुर्गाशङ्करपाठककृतानेकाशीर्वादास्समुल्लसन्तु आगे हजूर सों शिरोमणिप्रकाश ग्रन्थ की किताब १ आई औ हाल मों अविरोधप्रकाश औ अविरोधप्रकाशविवेक की किताब १ आई हमने सब अवलोकन किया उस मों श्रीशुभाजी रामचन्द्रकृत शिरोमणिप्रकाश औ अविरोधप्रकाशविवेक यह दूनों ग्रन्थ अच्छे हैं इससे लोकोपकार बड़ा होगा औ हजूर ने जो नीलकण्ठ का खण्डन लज्जाशङ्करज्यौतिषी के पास काशी मों पत्र के साथ भेजा उस मों नीलकण्ठ हमही को बनाया औ नीलकण्ठ का ग्रन्थ तो बहुत प्राचीन औ काशी मो घर घर है उसका आदर कोई नहीं करता है हमारे हिंयां भी वेदवृत्त बालकृष्ण हमारे विद्यार्थी ने दुष्टमुखचपेटिका इसी नीलकण्ठ का खण्डन बनाया है सो सेवाराम जोशी ने अच्छी तरह से देखा ही है और श्रीद्गुरू हमारे श्रीशिवलालपाठकजी सिद्धान्तमञ्जूषा किये हैं तद्विरुद्धप्रतिपादन करना हमको असंभव ही है और पूणा के पत्र की नकल जो काशी मों आई सो हमने देखी उसमों नीलकण्ठ हमही कों समक्ष कों उना ने भी कटु लिखा हुआ भी हमारी बदनामी होती है सो हम कों तो सर्कार के मुलाकात सों बड़ी उमेद भई की अब हमारी बहुत बेहतरी होगी सो वृथा कलंक होता है औ सेवाराम जोशी को चलते बखत हमने कहा था की हमारे तरफ सें सर्कार कों प्रार्थना करना की हमारे ऊपर प्रसन्नता रहै आप धर्म के संस्थापक हैं आप का प्रताप औ कीर्ति ईश्वर सर्वदा करें यह प्रार्थना करते हैं हम तो केवल सर्कार के हैं आप सद्विद्या के रक्षक हैं और विशेष सेवारामजी के पत्र कों मुलाहेजा करने सों मालूम होगा अलमति विस्तरेण विज्ञप्रभुवर्य्येषु मिति श्रावणशुक्लद्वितीया गुरुवासरे संवत् १८६४ ।

एतत्पत्रेण दुर्गाशङ्करपाठकगुरोः शिवलालपाठकस्य सिद्धान्तमञ्जूषाख्या कृतिस्तच्छिष्यस्य बालकृष्णाख्यस्य च दुष्टमुखचपेटिका च । परन्त्वेतत्पुस्तकद्वयमस्मद्दृष्टिगोचरीभूतं न जातम् ।

रीवांनगरनरपतिना श्रीविश्वनाथवीरपुङ्गवेन सिंहासनरचनारीतिपठनार्थं श्रीदुर्गाशङ्करपाठकसविधे स्वीयो गणकः प्रेषितः। पाठकेन तद्रीतिं सम्यग्ध्याप्य पत्रे तदनुसारेण चित्ररूपं सिंहासनं च विरचय्य तेन सह तदीयो गणकः प्रेषितः। श्रीविश्वनाथमहाराजश्च तेन सिंहासनचित्रेण प्रीतः पाठकाय मुद्रासहस्रदशकं ददाविति परम्परातः श्रूयते।

अयं सङ्गीते चित्ररचनायामशेषवाद्यविधौ च कुशलः शास्त्रविशेषप्रविष्टानेव छात्रानध्यापयति स्म। अयं महाभिमानी स्वर्गवासिमहाराजकाशिराजश्रीमदीश्वरीप्रसादसिंहवीरपुङ्गवगेहेऽसकृदाहूतोऽपि न गतः। यदि मद्गेहे महाराजो वारद्वयमागच्छेत्तर्हि तत्रैकवारमहं गमिष्यामीत्यभिमानेन काशिराजसभा न समाभूषिता।

सिहोरनगरस्य—एजेण्टसाहिबसविधे पत्रप्रेषणसमयेऽस्य वयः पञ्चाशद्वर्षसमं कल्प्यते तदास्य जन्मशको नवखसप्तेन्दु १७०९ समः समायाति। सम्प्रति प्रायः सर्वे प्रसिद्धा अप्रसिद्धाश्च काश्यां वर्त्तमाना ज्योतिर्विदोऽस्यैव शिष्यप्रशिष्यपरम्परायां वर्त्तन्ते। कमलाकरमुनीश्वरयोः खण्डनप्रखण्डनपरा ग्रन्था अन्ये प्राचीनज्यौतिषग्रन्थाश्च पाठकसविधे ह्यासन् तान् गृहीत्वा तद्भ्रातुष्पुत्रेण जटाशङ्करशर्म्मणा कोटानगरी गता तत्रैव स्वा वसतिश्च चक्रे। अधुना तद्वंशीयास्तत्रैव वाऽन्यत्र तेषां निकटे ते ग्रन्थाश्चसर्वे सन्ति वा नेति सर्वं न ज्ञायते।

## गोविन्दाचारी। १७१६

गोवर्द्धनाचारिपुत्रः सरयूपारीणब्राह्मणो भभयामिश्रः काश्यां दारानगरनिवासी ज्यौतिषे त्रिस्कन्धकुशलस्तन्त्रविद्यापण्डितश्चासीत्। अयं यद्यपि रामानुजत्वेन प्रसिद्धस्तथापि प्रच्छन्नरूपेण वाममार्गप्रवृत्त आसीत्। दक्षिणदेशादागतस्य कस्यचित्पण्डितस्य मुखात् "यदि कश्चिन्नारीगुह्याङ्गे प्रक्षिप्तजिह्वो मन्मन्त्रं जपेत्तर्हि मासेन सिद्धो भवेदि"ति निशम्यैतत्संमत्याऽस्य पुत्रो राजाशर्म्मा, काशीस्थस्य चूडामणिपण्डितस्य पुत्रो दुःखभञ्जनशर्म्मा परमसुखोपाध्यायदत्तकपुत्रस्य रामनारायणशर्म्मणः पुत्रो रघुनाथशर्म्मा—इति त्रयस्तत्कर्म्मणि मुद्रादशकद्वयप्रलोभनेन कामपि



नटीं सन्तोष्य प्रवृत्ता अभूवन्। पश्चादसिद्धो राजाशर्म्मा नट्यै मुद्रा न प्रादात्। नटी च मुद्रालाभार्थं सर्वत्र गोविन्दाचारिणं तत्सुतं च बहुधा निनिन्द। सर्वत्र निन्दयाऽऽकुलमना गोविन्दाचारी पञ्चसप्तसप्तेन्दु १७७५ शके काशीं विहाय विन्ध्याचलदेवीं ययौ तत्रैव वसतिं कृत्वा सर्वत्र स्वविद्यया कीर्त्तिं च संस्थाप्य फलिते साधनसुबोधयोगिनीदशादिद्वित्रान् ग्रन्थान विरचय्य नवाष्टसप्तेन्दु १७८९ शकासन्ने पञ्चत्वं गतः। निधनिसमयेऽस्य वयस्त्रिसप्ततिवर्षासन्नमासीदिति वृद्धेभ्यः श्रूयते तेन जन्मशको नृपसप्तेन्दुसमानन्न १७१६ आयाति। एतद्वंशजाश्चाद्यावधि विन्ध्याचले वर्त्तन्ते यन्निकटे गोविन्दाचारिसम्पादिता बहवो ज्यौतिषग्रन्था वर्त्तन्ते। काश्यां मिर्जापुरे विन्ध्याचले चास्य मारणमोहनवशीकरणोच्चाटनादिषु तन्त्रशास्त्रे महती प्रथाऽऽसीत्।

## जयरामज्यौतिषी। १७१७

महाराष्ट्रब्राह्मणो वाराणसीनिवासी बबुआज्यौतिर्वित्पुत्रः स्वपितुरधीतविद्यो ज्यौतिषे व्याकरणे न्याये काव्यसाहित्ययोश्च कुशलः स्वविद्यया चमत्कृतकल्पनया च प्रौढसभारञ्जन आसीत्। अस्य स्मृतिशक्तिः पट्टिकां विनाऽन्तःकरणे सर्वगणितकरणे वस्तुतः श्लाघनीया। अयं ज्योतिर्विद्दुर्गाशङ्करपाठकश्चोभौ समकालिकौ परस्परं प्रतिस्पर्द्धिनावास्ताम्। एतत्पुत्रो भाऊशास्त्री सम्प्रति वर्त्तमानकाशिराजाश्रितोऽस्ति कुलपरम्परागतां तद्वृत्तिं च भुङ्क्ते। एतत्प्रशंसां श्रुत्वा सिहोरनगरात् एजेण्ट विल्किनसिन्साहिबेनावलोकनार्थं लज्जाशङ्करज्योतिर्विद्द्वारा तदीयसभाविद्वज्जनरचितं पुस्तकं प्रेषितम (ज्योतिर्विल्लज्जाशङ्करवर्णनं विलोक्यम्)। अस्य निधनसमयासन्नशकः सप्तसप्तसप्तेन्दुसमस्तदा तद्वयः षष्टिश्चेत्तदाऽस्य जन्मशकः सप्तेन्दुसप्तेन्दुसम १७१७ आयाति। यद्यप्यस्य काचित्कृतिः प्रसिद्धा न तथापि काश्यामस्य महती प्रशंसाऽद्यावधि वृद्धानां मुखेभ्यः श्रूयते।

## सेवारामशर्म्मा। १७१७

सनाढ्यब्राह्मणो बांसबरेलीमण्डलान्तर्गतसर्कराग्रामनिवासी सम्प्रति प्रसिद्धबापूदेवशास्त्रिगुरुः सप्तेन्दुसप्तेन्दुमिते १७१७ शके शुद्धभाद्रपदशुक्लाष्टम्यां सोमे ह्युदभवत्। पतिनिधनशोकविधुराऽस्य माता द्वादशवर्षवयस्कममुं

मूलस्थानं त्यक्त्वा काशीमानयत् । तत्रायं श्रीबालकृष्णज्योतिर्विदो ज्यौतिषसिद्धान्तग्रन्थान् परमसुखोपाध्यायात् फलितग्रन्थान् चादेकरोपनामाकबापूशास्त्रिणश्च करणग्रन्थान् सम्यगध्यैष्ट । सिहोरनगरस्थ-एजेण्ट लान्सिलिट् विल्किन्सन (Mr. L. Wilkinson,* who published Siddhánta Siromaṇi in the year 1841 A. D. at Calcutta). साहिबेन काशिकराजकीयप्रधानपाठशालाध्यक्षसविधे "सिद्धान्तकुशलमेकं गणकं प्रेषये"ति पत्त्रं लिखितम् । तेन पाठशालाध्यक्षमहाशयेन च ज्यौतिषसिद्धान्तकुशलो नवीनकल्पनावैभवशाली सेवाराम एव प्रेषितः । तत्रायं स्वविद्यया वशीकृतसकलजनस्तोषितप्रभुः सिहोरसंस्कृतपाठशालायां ज्यौतिषप्रधानपदमुपादाय चिरं बापूदेवशास्त्रिमुखान् बहून् छात्रान् समध्यापयत् । इन्दोरनगरस्थ-एजेण्ट हमिलटनसंज्ञकेन च सिहोरनगरस्थ-एजेण्टसाहिबं संप्रार्थ्य तत्र नीत्वाऽयमिन्दोरनगरसंस्कृतपाठशालायां ज्यौतिषाध्यापनार्थं नियुक्तः । वर्षद्वयानन्तरं बडवानीनगरस्थराणाशिक्षार्थं तत्र प्रेषितस्ततोऽपि वर्षद्वयानन्तरं पुनरिन्दोरनगर्यामाहूतश्च । तत्र वर्षद्वयमुषित्वा स्वमित्रसिहोर-एजेण्टसाहिबाज्ञया स सिहोरनगरं समागतवान् । ततो वर्षद्वयानन्तरं विल्किन्साहिबनिधनशोकातुरो निजां जरावस्थां च समीक्ष्य स्वपदं त्यक्त्वा काशीमुपागमत् । जम्बूदेशाधिपतिना श्रीरणवीरसिंहवीरपुङ्गवेनासकृदाहूतोऽपि तत्र न गतवान् । अयोध्याधिपतिमानसिंहेनाप्याहूतस्तत्र न गतः । बलरामपुराधिपतिदिग्विजयसिंहविनयेन किञ्चित्कालं तद्राजधानीं विभूष्य तं पाठयामास च । तदीयो ज्येष्ठपुत्रः श्रीकृष्णदत्ताभिधश्च इन्दोर-आगरा-झासी-हमीरपुर-लखनौ प्रधानपाठशालासु छात्रानध्याप्य ग्रामपाठशालानिरीक्षणार्थं डिप्युटीइन्सपेक्टरपदं समवाप्य चिरं सम्यक् स्वकार्यं सम्पाद्यार्धवेतनेन स्वपदं विहाय किञ्चित् कालपर्यन्तं काशीं च विभूष्य नागखाष्टेन्दु १८०८ शके पञ्चत्वं गतः । सेवारामशर्म्मा च चिरं वाराणसीं निषेव्य विश्वेश्वरं सम्पूज्य युग्मनन्दसप्तेन्दु १७९२ शके ज्येष्ठे मासि सर्वत्र स्वामतुलां कीर्त्तिं संस्थाप्य संसारं चासारं समवगम्य स्वर्गसुखं च तुच्छीकृत्याविमुक्ते शरीरं मुक्त्वा मुक्तिपदं ययौ । संप्रति तत्कनिष्ठः पुत्त्रः श्रीसिद्धेश्वरशर्म्मा समधीतज्यौतिषविद्यः स्वगृहे बहून् छात्रानध्यापयन् राजति तस्मादेवेदं तत्पितृवर्णनं मया लब्धं प्रामाणिकजनेभ्यस्तत्सत्यत्वं चावगत्यात्र निबद्धम् ।

* He was Political Agent at Sehore.



## लज्जाशङ्करशर्म्मा । १७२६

अयं गुर्जरजातीयो मोरब्राह्मणो लक्ष्मीपतेर्दुर्गाशङ्करपाठकाच्चाधीतज्यौतिषविद्यः कृष्णदेवनिधनानन्तरं काशिकराजकीयसंस्कृतपाठशालायां तत्पदे नियुक्तः । अर्थाद्यदा कृष्णदेवो गणितप्रधानाध्यापक आसीत्तदाऽयं तदधो लघुमासिकेन तत्साहाय्यार्थं तत्रैव लघ्वध्यापकस्तन्निधनानन्तरं च तस्यैव पदे तत्रत्याध्यक्षैर्नियुक्त इति । अस्य निधनं रूपाष्टसप्तेन्दु १७८१ शके तच्छिष्येभ्यो मद्गुरुभ्यो देवकृष्णशर्म्मभ्यः श्रूयते । तत्समये तदीयावस्था च पञ्चपञ्चाशद्वर्षसमा श्रुता ततोऽस्य जन्मशको रसयमसप्तेन्दुसमः १७२६ सिध्यति । अस्यानेके छात्राः सिद्धान्तविद्याकुशला बहुभी राजभिर्लब्धादरा अभूवन् ।

अयं चारुवपुष्मान् प्रियभाषी शान्तो दयालुः सत्यशीलः परिश्रमेण बह्वादरधिया सम्यक् छात्रानध्यापयति स्म । तेनैवास्यान्तेवासिनो दिगन्तजातकीर्त्तयोऽधीतबहुज्यौतिषविषया जगति प्रसिद्धा बभूवुः । दुर्गाशङ्करपाठकस्य समागक्षमानन्तरमेतत्सविधे विल्किन्सन्साहिबेन नीलकण्ठकृतविरोधप्रकाशकस्य खण्डन†रूपोऽविरोधप्रकाशकविवेकाख्यो ग्रन्थो दुर्गाशङ्करपाठकावलोकनार्थं पत्रद्वारा प्रेषितः । एनेन तदुत्तरपत्रं यल्लिखितं तदेजण्टविल्किन्सनद्वारा तदीयगणकेन सेवारामशर्म्मणा लब्धमधुना तत्पुत्रात् श्रीसिद्धेश्वरशर्म्मणो लब्धस्य तस्यैव लज्जाशङ्करलिखितपत्रस्य पाठकानां विनोदाय लेखः प्रदर्श्यते ।

स्वस्ति श्रीमत्परमसन्मतिविस्तारविस्तरितपराक्रमाक्रामितबलवदरिधरानायकमौलिमुकुटमणिस्फुरत्कान्तिचुंबितचरणसरोरुहसकलपण्डितमण्डलीसमाश्रयविश्रान्तिकल्पपादनिरुपमधीकरुणावरुणालयक्षपाकरत्रपाकरवदनारविन्दसप्तजलधिपारीणशरच्चन्द्रचन्द्रिकावदातकीर्त्तिश्री५लान्सिन्सट्विल्किन्स-

* दुर्गाशङ्करपाठकवर्णनं विलोक्यम् ।

† अयं खण्डनरूपो ग्रन्थः एजेण्टसाहिबानुज्ञया नवपञ्चसप्तेन्दु १७५९ शके सुब्बाजीरामचन्द्रेण कृतः । तत्रान्तिमश्लोकश्च

"नन्दभूतगिरिचन्द्र १७५९ संमिते शालिवाहनशकेऽयने शुभे ।
राधमासि सितसप्तमीभृगौ सन्मुदे लिखितमस्तु पुस्तकम् ॥
इति विल्किन्सन्साहिबसभायां विचारः" ।

न्साहिबबहादुरप्रभुवर्य्येषु कम्पिनीबहादुरनिर्मितकाशीपाठशालास्थलज्जाशङ्कर-ज्योतिर्वित्प्रणीतानेकाशिषः समुल्लसन्तुतरां शमत्र तत्रत्यमनुदिनमेधमानमाशास्महे वृत्तं तु भाषया आगे सरकार से किताब २ आई उस मो अविरोध-प्रकाश एक द्वितीय अविरोधप्रकाशविवेक इय दोनो अवलोकन किया उस में सुब्बाजी रामचन्द्र पण्डितकृत अविरोधप्रकाशविवेक हमको बहुत अच्छा मालूम होता है और नीलकण्ठ की कृति पर जो हजूर से लिखा आया सो हमने देखा तो नीलकण्ठने केवल पुराणाग्रहमात्र किया है हम तो सिद्धान्तमतानुयायी हैं आगे हम ने श्री ५ दुर्गाशङ्कर पाठक जी को हमारी चिठि और नीलकण्ठ की कृति पर हजूर सो लिखा आया इय दूनो देखाया तब उनो ने कहा के इस मो हमही कों नीलकण्ठ अपनी इच्छा सो बनाय को उत्तर पूछते हैं सो बड़ा आश्चर्य है नीलकण्ठ का खण्डन हमारे शिष्य बालकृष्ण वेदवृत्त का बनाया दुष्टमुखचपेटिका सेवाराम जोशीको देखाया ही रहा उस मो इय खण्डन तो गतार्थ ही है आगे हम ने भी देखा तो हजूर से लिखा आया सो भी उस मो लिखाहि है आगे श्रीदुर्गाशङ्कर पाठक जी के गुरु श्री६ शिवलाल पाठक जी ने सिद्धान्तरत्नमञ्जूषा किये हैं उस मो निरूपण है उस्सो विरुद्ध श्रीदुर्गाशङ्करपाठक जी का मत कदापि नहिं होने सकेगा आगे दुसरी चिठि सिहूर से भेजी उस मोड़ के दसक्त मे जो पुने की चिठि की नकल आइ उस मो भी बाबा जोशी रोडे करने श्रीदुर्गा-शङ्कर पाठक जी को नीलकण्ठ समुज को कटुवचन लिखा सो बड़ा खेद भया नीलकण्ठ का ग्रन्थ तो बहूत प्राचीन है काशी मो बहुत लोग के पास है प्रसिद्ध है और लोगों की अरुचि है और पाठक जी सिद्धान्तानुयायी उन को वृथा कलङ्क होना अयोग्य है ऐसी बाते सुन को उनका मन उदासीन है और श्रीजयराम जोशी को लिफाफा मो किताप भेजी थी सो हमने दीया और नीलकण्ठ की कृति पर जो हजूर से पोथी आयी थी सो भी लिखवाय को दीया है और उनके पास कै येक वेर जवाप मांगा परन्तु अभी तक कुछ जवाप नही दिया जब उन्ने जवाप लिखेंगे तब हम पिछे से भेज देंगे अलमतिविस्तरेण विज्ञवर्य्येपु संवत् १८६४ श्रावणकृष्ण अमावास्या ।

काशिकराजकीयपाठशालाकार्यसम्पादकाः सभ्या नखधृति १८२० ख्रीष्टशके मार्चमासस्य ३ दिने पाठशालास्थितिप्रदर्शकं पत्रं कालिकातायां प्रधानराजकार्याधिपतिसविधे यत्प्रेषितवन्तस्तत्राऽस्य ज्यौतिषच्छात्राणां मध्ये प्रशंसा कृताऽस्ति रूपद्विधृति १८२१ ख्रीष्टशके जानुअरीमासस्य



१ दिने ज्यौतिषसिद्धान्तोत्तमपरीक्षादानेन स्वर्णमुद्राद्वयमयं लब्धवान् । पाठशालाकार्यसम्पादकसभ्यैर्यदा षड्यमधृति १८२६ ख्रीष्टशके सेप्टेम्बरमासे द्वितीयगणिताध्यापकपदमनुपयुक्तमवलोक्य न्यूनीकृतं तदा प्रधानगणित-शास्त्राध्यापकपण्डितकृष्णदेवसाहाय्यार्थं लघुवेतनेनाऽयं नियुक्तः । (कृष्ण-देववर्णनं विलोक्यम्) (See Sketch of the Rise and progress of the Benares PáthaSálá p. 96, 160, 219, 271.)

## नन्दलालशर्म्मा वा नन्दरामशर्म्मा * । १७२६

सरयूपारीणो ब्राह्मणः प्रयागमण्डलान्तर्गतकडेमानिकपुरग्रामवासी काशिकराजकीयसंस्कृतपाठशालायां लज्जाशङ्करज्योतिर्वित्साहाय्यार्थं कृष्णदेव-निधनानन्तरं सप्तपञ्चसप्तेन्दु १७५७ शके ज्यौतिषाध्यापनार्थं द्वितीया-ध्यापकः कृष्णदेवाल्लज्जाशङ्कराच्चाधीतविद्यश्चासीत् । यद्यप्ययं पाठशालायां गणितशास्त्राध्यापकत्वेन नियुक्तस्तथाप्यस्य फलिते महती रुचिस्तद्वशेन सर्वत्र प्रसिद्धिश्चाभवत् । अयं बहूनि वर्षाणि स्वपदं सम्यग् विभूष्य बहून् सुयोग्यान् छात्रांश्चाध्याप्य फलितविद्यया बहूनि धनानि चार्ज्जयित्वा नन्दाष्टसप्तेन्दु १७८९ शके पञ्चत्वं गतः ।

सम्प्रति तदर्जितधनकलान्तरादिना तत्पुत्रोऽम्बिकाप्रसादशर्म्मा पञ्चचत्वारिंशद्वर्षासन्नवयस्कः सुखेन साधुवृत्त्या समयं जापयन् राजति । नन्दरामशर्म्मणो निधनसमये तदीयावस्था त्रिषष्टिवर्षासन्नाऽऽसीदिति मया स्वताता-त्तत्पुत्राच्च श्रुतं सम्प्रति अनुमीयते च तच्छरीरस्य स्वल्पे वयसि निरीक्षण-त्वात् । एवं तज्जन्मशको रसकरसप्तेन्दुसमासन्न १७२६ आयाति । अस्यैव नन्दरामशर्म्मणः शिष्यो मत्तातः कृपालुदत्तशर्म्माऽऽसीत् ॥

## देवकृष्णशर्म्मा । १७४०

गौडब्राह्मणो रामधनमिश्रतनयः काशिकराजकीयपाठशालायां गणित-शास्त्रप्रधानाध्यापकाल्लज्जाशङ्करविदुषोऽधीतसर्वज्यौतिषविद्यो मद्गुरुः स्वल्प

* एतदासन्नसमय एव काश्यामतीव प्रसिद्धो ज्यौतिषसिद्धान्तवेत्ता मयूरभट्टो यश्च चित्रकूट-निवसतः श्रीमन्तमहाशयस्य प्रधानज्योतिर्वित् सर्वेषां ज्यौतिषच्छात्राणां परीक्षक आसीत् । तथा फलितवेत्ता लक्ष्मणनामा ज्योतिर्विदस्य "तत्कालमिन्दुसहितो द्विरसांशको य" इति बृहज्जातक-श्लोकानुसारतो भाविजन्मकालप्रकथने महती प्रसिद्धिरासीत् ।

एव वयसि द्वाविंशतिवर्षासन्ने यथावज्ज्यौतिषमधीत्य स्वसदन एव बहूनि वर्षाणि बहून् मिथिलादिनानादेशागतान् सुयोग्यान् छात्रानध्यापयत्। रूपाष्टसप्तेन्दु १७८१ शके काश्मीराधिपतिना जम्बूनगरनिवासिना श्रीमहाराजरणवीरसिंहवीरपुङ्गवेन "नूतनं ज्यौतिषशास्त्राध्यापनार्हमेकं सुयोग्यं गणकं प्रेषये"ति पत्रं वाराणस्यां पाठशालाप्रधानाध्यक्षडाक्टरबालण्टैनसाहिबसविधे प्रेषितम्। तेन महाशयेनायमेव प्रेषितस्तत्र नववर्षाणि सम्यक् कार्य्यं सम्पाद्यासकृज्ज्यौतिषशास्त्रचमत्कारप्रदर्शनेन महाराजतो लब्धबहुपारितोषिकोऽपि काशीविरहविधुरोऽत्रत्यच्छात्रवर्गप्रार्थनया नन्दरामशर्म्मनिधनानन्तरं वसुरसधृति १८६८ ख्रीष्टशके काशिकराजकीयपाठशालायां तत्पदं पाठशालाध्यक्षग्रिफिथसाहिबमहाशयानुकम्पया लब्धवान्। सम्प्रति बहुवर्षाणि यथावत् स्वपदकार्यं सम्पाद्य परःशतान् योग्यान् छात्रांश्चाध्याप्य जराशिथिलं शरीरमवगम्य रूपरूपाष्टरूप १८११ मिते शालिवाहनशके किल तृतीयांशवेतनेन स्वपदं विहाय वाराणस्यां स्वसदन एव शोभते जगद्गुरुर्देवकृष्णशर्म्माऽयं प्राचीनपरम्परागतानां गणितफलितग्रन्थतत्त्वार्थानामेकवेत्ता विवादे सिद्धान्तकर्त्ता चतुःसप्ततिवर्षवयस्कः खवेदसप्तेन्दु १७४० शके ऽर्थात् वसुरूपवसुवसुमती १८१८ ख्रीष्टशके नोवेम्बरमासस्य ९ दिने लब्धजन्मा च।

## नृसिंहदेवशास्त्री वा बापूदेवशास्त्री। १७४३

ऋग्वेदीयः सीतारामदेवतनूजः पूनानगरनिवासी महाराष्ट्रभेदे चितपावनजातीयो रूपकरेभेन्दु१८२१ ख्रीष्टशके नवेम्बरमासस्य १ दिने खलूदभवत्। बालावस्थायां नागपुरपाठशालायां महाराष्ट्रभाषीयं यूरपदेशीयं व्यक्तगणितं बीजगणितं च सम्यगपठत्। तत्र कान्यकुब्जढुण्ढिराजमिश्राद्भास्करीयं व्यक्तमव्यक्तं चाध्यैष्ट।

कार्यान्तरवशात् तत्र खरसप्तेन्दु १७६० शालिवाहनशके गत एजेण्टलान्सलिट् विल्किन्सन् ( Mr. L. Wilkinson ) साहिबमहाशयोऽमुं गणिते निपुणं निरीक्ष्य सिहोरनगरस्थसंस्कृतपाठशालायां ज्योतिर्वित्सेवारामसविधे पठनार्थं प्रेषितवान्। तत्रायं पादोनवर्षद्वयं रेखागणितादिकमधीत्य सम्यक् परीक्षां च दत्त्वा एजेण्टविल्किन्सन्साहिबानुकम्पया



युग्मवेदधृति १८४२ ख्रीष्टशके फेब्रुअरीमासस्य १५ दिने यूरपदेशीयरेखा* गणितस्य संस्कृतभाषायामध्यापनार्थं काशिकराजकीयप्रधानसंस्कृतपाठशालायां नियुक्तः। एतदागमनात्पूर्वं रेखागणिताध्यापनार्थं कलिकातातः कश्चिद्वङ्गदेशीय आहूत आसीत् परन्तु एजेण्टसाहिबानुग्रहेणायमेव तत्र नियुक्तोऽभूत्। अयं किल स्वकार्यं सम्यक् सम्पाद्य लज्जाशङ्करनिधनान्तरं प्रधानगणितशास्त्राध्यापकपदं समवाप्य संस्कृतभाषायां रेखागणितस्य प्रथमाध्यायम्, त्रिभुजगणितपर्य्यन्तं त्रिकोणमितितन्त्रम्, सायनवादम्, प्राचीनज्योतिषाचार्याशयवर्णनम्, अष्टादशविचित्रप्रश्नानां सङ्ग्रहं सोत्तरम्, तत्त्वविवेकपरीक्षाम्, काश्यां मानमन्दिरस्थयन्त्रवर्णनम्, दशमलवादिबोधकं व्यक्तगणितम्, इत्येतानि पुस्तकानि विरचय्य संमुद्र्य च, चलनकलनस्याद्याध्यायसिद्धान्तबोधकान् विंशतिश्लोकान्, चापीयत्रिकोणगणितस्य द्वित्रिसत्कावयवबोधकानि कतिपयसूत्राणि, सिद्धान्तग्रन्थोपयोगिक्रोडपत्राणि, यन्त्रराजोपयोगिछेद्यकं, लघुशङ्कुच्छिन्नक्षेत्रगुणां चेत्येतानि चामुद्राणि विहाय हिन्दीभाषायां ग्रामपाठशालास्थबालानामुपकारार्थं व्यक्तगणितम्, बीजगणितम्, फलितविचारम्, सायनवादानुवादम्, पञ्चाङ्गोपपादनं च विरचय्य संमुद्र्य च। अङ्गलभाषायां सूर्यसिद्धान्तानुवादं, भास्करीयसिद्धान्तशिरोमणेर्गोलाध्यायानुवादं मानमन्दिरस्थयन्त्रवर्णनं च कृत्वा संमुद्र्य च। भास्करीयलीलावतीं सिद्धान्तशिरोमणेर्गणितगोलाध्यायौ च संशोध्य टिप्पणीभिर्विभूष्य संमुद्र्य च। १९३२-१९४७ विक्रमाब्दानां यूरपदेशीयनाटिकलआलमनाक ( Nautical Almanack ) पञ्चाङ्गानुसारेण काश्यां संस्कृतभाषायां पञ्चाङ्गानि च विरचय्य संमुद्र्य च। पाठशालाध्यक्षानुकम्पया १८६४ ख्रीष्टशके ग्रेटब्रिटेन् आयरलेण्डस्य रायलएशियाटिक (Royal Asiatic Society of Great Britain and Ireland ) समाजस्यादरणीयसभ्यपदं तथा १८६८ ख्रीष्टशके वङ्गदेशीय-एशियाटिक समाजस्या (Asiatic Society of Bengal) दरणीयसभ्यपदं, १८६९ ख्रीष्टशके कलिकाताविश्वविद्यालय—(Calcutta University.) स्य सहवासि (Fellow) पदं वसुसप्ताष्टेन्दु १८७८ ख्रीष्टशके सी. आइ. ई. (C. I. E.) Companion of the Order of the Indian Empire— नामकपदवीम्, जुबिलीमहोत्सवे महामहोपाध्यायपदवीम्, अलाहाबादयुनि-

* अयं च रेखागणिते नीलाम्बरशर्म्मदेवकृष्णशर्म्मादीनां च गुरुरासीत्।

वर्सिटीसभ्यपदं च समवाप्य जराजर्जरितं शरीरं शिथिलमवज्ञाय नवाष्टाष्टेन्दु १८८९ ख्रीष्टशके एप्रिलमासस्य १ दिने अर्द्धवेतनेन काशिकराजकीयप्रधानसंस्कृतपाठशालीयप्रधानगणितशास्त्राध्यापकपदं सन्त्यज्याऽस्मान्‌ पूर्णकामं संसारं चासारं समवगम्य युग्मेन्दुवसुरूप १८१२ मिते शालिवाहनशके वैशाखे मासि स्वशरीरं विहाय दिवं ययौ । अयं च स्वसमये सर्वत्र लब्धप्रतिष्ठो गणितप्रवीणो जगतां * गुरुरासीत्‌ ।

अयं यूरपदेशीयप्रकारान्‌ संगृह्य बहुत्र लीलावतीगोलगणिताध्यायटिप्पणीषु स्वकल्पितसङ्केतेन व्यर्थं वासनायां गुरुकर्म्म मन्दानन्दकरं कृतवान्‌। कुत्रचित्‌ महाप्रश्नटिप्पण्यादौ स्वोक्तलग्नानयनादिप्रकारेषु प्रमादतो गणितकर्म्मानयनाशुद्धिं च चकार ।

अस्य माता सत्यभामानाम्नी सन्तानविरहविधुरा नृसिंहदेवमाराध्य बहुनायासेनामुं प्राप्तवती । अतोऽस्य नामकरणं नृसिंहदेव इति कृतवती पश्चाल्लालनेन बापू इति प्रसिद्धिर्जाता । इति तल्लिखित † लीलावतीटीकामनोरञ्जनीसमाप्तौ तद्रचितश्लोकद्वयेन

"खरसाद्रिकु१७६०मितशाके विलम्बकेऽब्दे च कार्त्तिके मासे ।
कृष्णे पक्षेऽष्टम्यां भार्गववारेऽपराह्णसमये च ॥
बापू इति प्रसिद्धः परमभिधानं च यस्य नृहरिः स्यात्‌ ।
लिखितं तेन शुभमिदं लीलावत्या उदाहरणम्‌ ॥

इत्यनेन बुध्यते । कुत्रचिदयं छन्दोभङ्गभिया बापू इति ह्रस्वपुकारेण स्वनाम विलिलेख यथा तन्मुद्रितसिद्धान्तशिरोमणिभूमिकासमाप्तौ "मिलितकरयुगोऽहं बापुदेवाभिधानः" इत्यत्र ह्रस्वपुकारेण स्वनाम लिखितं तेन ।

वस्तुतो भारतवर्षेऽयमतीव भाग्यशाली पण्डितो यूरपदेशीयगणितबलेन प्रख्यातोऽभूत्‌ । यूरपदेशीयगणनानुसारेणास्य चन्द्रग्रहणपरिलेखं निरीक्ष्य जातहर्षो जम्बूदेशाधिपती रणवीरसिंहवीरपुङ्गवोऽस्मै सहस्रमुद्राः प्रादात्‌ ।

* यद्यप्ययं प्रथमं Natural Philosophy अध्यापनार्थं नियुक्तः परन्तु संस्कृतभाषायां तद्विषयकपुस्तकानामभावाद्रेखागणिताध्यापनार्थमेव प्रवृत्तः ।

† इदं पुस्तकं काश्यां पण्डितसेवारामसूनुश्रीसिद्धेश्वरज्योतिर्विद्गृहे वर्त्तते । बापूदेवशास्त्रिणा च स्वगुरोः सेवारामस्य कनिष्ठपुत्रश्रीसिद्धेश्वरशर्मकृते तत्पुस्तकं लिखितमिति श्रीसिद्धेश्वरज्योतिर्विन्मुखाच्छ्रूयते ।



बालबोधाय वर्गसमीकरणमात्रबीजगणितकृतेऽस्मै पारितोषिकरूपं मुद्राशतद्वयं पश्चिमोत्तरप्रदेशीयाधिपति- ( Government of N. W. P. ) र्ददौ । वस्वष्टाष्ट ८८८ शके चैत्रशुक्लपञ्चम्यां गुरावहर्गणगणितकृतेऽस्मै डाक्टरकर्णनामा भारतवर्षभूषणपदवीमदात्‌ । ( See preface of BrihatSamhità edited by Dr. Kern p. 6-7 )

साधारणाकरणग्रन्थवेत्तारो ज्योतिर्विदोऽनायासेनाहर्गणगणितं कुर्वन्ति । नहि कस्यचिद्योग्यताऽहर्गणगणितेन निश्चेतुं शक्यते । वस्तुतोऽयं भारतवर्षीयप्राचीनसिद्धान्ताभिज्ञो नासीत्‌ किन्तु यूरपदेशीयगणितकर्म्मणा गणिते पाटवं सम्पाद्य सिद्धान्तशिरोमणिं संमुद्र्य स्वप्रसिद्धिं कृतवान्‌ । काशिकराजकीयप्रधानपाठशालायामेतत्समयतः प्राचीनपरम्परागतगणितपठनास्युच्छेदो जातः । अधुना छात्रा यूरपदेशीयरीतिवत्‌ गणितार्थं शिलोद्भवां पाटीं गृह्णन्ति ।

पुरा हि हिन्दीभाषायामस्य जीवनवृत्तान्तप्रकाशनेऽस्यान्तेवासी कान्यकुब्जरामेश्वरदत्तत्रिपाठी यश्च सम्प्रति मिर्जापुरप्रधानाङ्गलपाठशालायां संस्कृतपण्डितोऽस्ति प्रवृत्तः परन्तु पाठशालाध्यक्षग्रिफिथसाहिबमहाशयेन "कस्यचिन्निधनसमयासत्ते जीवनवृत्तान्तः सम्पूर्णो लेखनयोग्यो भवती"त्युक्तो निवृत्तस्तस्मात्‌ ।

अस्य पूर्वजाश्च अहमदनगरमण्डलान्तर्गतगोदातीरवर्त्तिटोकाग्रामनिवासिन आसन्‌ ।

## नीलाम्बरशर्म्मा । १७४५

झोपाख्यमैथिलब्राह्मणः पाटलिपुत्रनगरनिवासी स्वज्येष्ठभ्रातुर्जीवनाथशर्म्मणो ज्योतिर्विल्लज्जाशङ्कराच्चाधीतज्यौतिषविद्यः शम्भुनाथशर्म्मतनयः पञ्चवेदसप्तेन्दु १७४५ शके आषाढशुक्लैकादश्यां प्रादुरभूत । अयमलवरदेशनरपतिश्रीशिवदानसभाप्रधानगाणितिक आसीत्‌ ।

तस्मिन्नेव नृपतावलवरदेशं शासति यदा कपतानठामसक्याडेल्‌ नामा अलवरदेशस्य एजेण्टपदे नियुक्त ( Captain Thomas Cadell

V. C., Political Agent of Ulwur) आसीत् तदा नृपतिविनोदाय यूरपदेशीयरीत्यनुसारतो गोलप्रकाशाभिधं ग्रन्थं संस्कृते व्यरचयत्। यश्च बापूदेवशास्त्रिणा संशोध्य तदीयाज्ञया त्रिनवाद्रीन्दु १७९३ शके काश्यां मेडिकल्हाल्नाम्नि यन्त्रालये मुद्रितः।

अस्मिन् ग्रन्थे पञ्चाध्यायाः सन्ति यत्र प्रथमे ज्योत्पत्तिवर्णनं द्वितीये त्रिकोणमितिसिद्धान्तास्तृतीये चापीयरेखागणितसिद्धान्ताश्चतुर्थे चापीयत्रिकोणमितिसिद्धान्ताः पञ्चमे सरलत्रिकोणमितिचापीयत्रिकोणमितिसम्बन्धिनः सिद्धान्तोपयोगिनः प्रश्नाः सन्ति। वस्तुतः सम्प्रति यूरपदेशीयरीतिज्ञानार्थं यूरपभाषानभिज्ञानां छात्राणामनेन महानुपकारः।

अस्यादौ ११ श्लोकः

प्रोद्यत्कीर्त्तिसुधांशुदीधितिचयैरानन्दिताखण्डल-
श्रीलश्रीशिवदानसिंहनृपतौ राज्यं प्रकुर्वत्यदः।
सद्युक्तिग्रथितं स्वबुद्धिमथितं गोलप्रकाशाभिधं
श्रीनीलाम्बरभूसुरः प्रकुरुते सन्देहसन्दोहहृत्॥

अन्ते

गङ्गागण्डकिसङ्गमे हरिहरक्षेत्रं क्षितौ विश्रुतं
तस्मात्क्रोशयुगान्तरे सुरनदीतीरे परे दक्षिणे।
ख्याते पाटलिपुत्रसंज्ञनगरे विद्वज्जनैर्मण्डिते
ज्योतिर्दर्शनसर्वदर्शनयशा मान्यो वदान्यो विदाम्॥

श्रीशम्भुनाथः सुकृतैकगाथः कृपैकपाथः पतिरीशनाथः
अभूद् द्विजेन्द्रः सुचकोरचन्द्रः क्षितावुपेन्द्रः समरे वितन्द्रः॥
तदङ्गजः सर्वविदा समानस्त्रिस्कन्धपारङ्गमताभिमानः।
चकास्ति शिष्यादिविराजमानः श्रीजीवनाथः कविलब्धमानः॥
नीलाम्बराख्योऽकृत तत्कनिष्ठस्तल्लब्धबाधः परमैकनिष्ठः।
गोलप्रकाशाभिधमाशुबोध्यं निरस्तसन्देहमनोनुराधम्॥



यद्गोलपाण्डित्यविशेषरङ्गे सिद्धान्तकर्त्तुः पटुताविभङ्गः।
संभूषयन् शङ्करराजधानीं विद्याप्रदाता जगतामिदानीम्॥
श्रीबापुदेवः सुधियो मुदे वः संशोधयामास स यत्नपूर्वम्।
गोलप्रकाशं त्रिनवाद्रिभूभिः १७९३ समे च मुद्रायितवान् शकाब्दे॥

एनेन भास्करीयसिद्धान्तशिरोमणेर्ज्योत्पत्तेर्वलनस्य दृक्कर्मणो लीलावत्या अङ्कपाशस्य च टीका वासनामण्डिता कृता। अस्य ज्येष्ठभ्राता श्रीजीवनाथशर्म्मा च भास्करीयबीजटीकां भावप्रकाशादिफलितग्रन्थांश्च कृतवान्।

वस्तुत एतावुभौ प्राचीनज्यौतिषविद्याकुशलौ सर्वत्र लब्धप्रतिष्ठावास्ताम्। नीलाम्बरशर्म्मनिधनं काश्यां पञ्चाभ्रधृति १८०५ शके वैशाखशुक्लैकादश्यां मणिकर्णिकाघट्टेऽभूत्। निधानात्पूर्वं श्रीसीतारामप्रतिष्ठार्थं स्वगेहान्नातिदूरे मन्दिरं कारयामासायम्।

## गोविन्ददेवशास्त्री। १७५६

महाराष्ट्रभेदे चितपावनजातीयो बापूदेवशास्त्रिभ्रातुष्पुत्रो बापूदेवशास्त्रितोऽधीतज्यौतिषविद्यः काशिकराजकीयप्रधानपाठशालायां लज्जाशङ्करगणकनिधनानन्तरं नवपञ्चधृति १८५९ खीष्टशके तृतीयगणितशास्त्राध्यापकत्वेन नियुक्तः।

तस्मिन् समये श्रीदेवकृष्णशर्म्मा वस्तुतो गणितशास्त्राध्यापकः पाठशालीयच्छात्रेभ्य उत्तमः सर्वत्र प्रसिद्धस्तत्पदकार्यैककुशल आसीत् परन्तु बापूदेवशास्त्रिप्रार्थनया पाठशालाध्यक्षमहाशयेन श्रीडाक्टरबालण्टेनसाहिबेनायमेव नियुक्त इति काश्यां सर्वत्रैव प्रसिद्धिरस्ति। अयं पश्चात् खनगधृति १८७० खीष्टशके फेब्रुअरीमासे अङ्गलोसंस्कृतविभागे प्रधानाध्यापकसाहाय्यार्थं च पाठशालाध्यक्षेण श्रीग्रिफिथसाहिबमहाशयेन नियुक्तस्तत्र चाष्टौ मासान् कार्य्यं सम्पाद्य स्वल्पे वयस्येव खनगधृति १८७० खीष्टशके आक्टूबरमासस्य १२ दिने पञ्चत्वं गतः।

वस्तुतोऽयं विद्यारसिकः परिश्रमशीलः सुशीलः आसीत्। निजेन परिश्र-

मेणैव स्वल्पे वयसि गणितकान्याङ्गलभाषासु प्रवीणोऽभवत्। एनेनैव प्रसन्न-
राघवं बालरामायणं च नाम नाटकं संशोध्य काश्यां पण्डितपत्रे पृथक् च
मुद्रितम्। एवमस्य प्रसन्नराघवबालरामायणमुद्रणरूपा कृतिरेव राजति।
अयं पाठशालायामध्यापकत्वेन नियुक्तो यदाऽभूत् तदा प्रायोऽस्य वयः
पञ्चविंशतिवर्षासन्नमासोत् तेनाऽस्य जन्मशको रसपञ्चसप्तेन्दुसमासन्न१७५६
आयाति। अयं सन् १८६६ अगस्तमासस्य पण्डितपत्रे च यूरपदेशरीतिवत्
सायनेनैव गणना मुख्येत्यत्र किञ्चिल्लिलेख। यद्यप्ययं बापूदेवशास्त्रिभक्त-
स्तथापि पश्चाद्बापूदेवशास्त्रिणा महान् विरोधो जातः। यावज्जीवनं बापूदेव-
शास्त्रिणा तिरस्कृत आसीत्।

## आधुनिका ज्योतिर्विदः फलमात्रैकवेदिनः।

व्याकरणादिशास्त्रमज्ञात्वैव लघुपाराशरीबालबोधशीघ्रबोधमुहूर्त्तचिन्ता-
मणिनीलकण्ठीबृहज्जातकजैमिनिसूत्राणामेकदेशेन मत्ता आत्मानं कृतकृत्यं
ज्यौतिषशास्त्रपारङ्गतं मन्यन्ते। तत्र साहसिनो मकरन्दादिरचितसारण्यनु-
सारेण तिथ्याद्युपपत्तिं विनैवाऽऽधारसारणी च वस्तुतः शुद्धा वा नेति सवंम-
बुद्ध्वैव तिथिपत्रं विरचय्याऽऽत्मप्रसिद्धिं कुर्वन्ति।
केचन च दुर्बोधलवमादकद्रव्यबलेनोन्मत्ता मुद्रणयन्त्रालयाधीशत्वेन
वाऽन्यदत्तद्रव्यलोभतः प्राचीनग्रन्थान् सङ्गृह्याऽऽद्रावन्ते च नूतनान् द्वित्रान्
श्लोकान् विरचय्य प्रशंसामात्रैकपूरितान् वस्तुतोऽसाररूपान् समुद्ररत्नाकर-
तत्त्वादिनामकरणालङ्कृतान् ज्यौतिषग्रन्थान् विरचयन्ति।
अहो एते चात्मप्रशंसाभिलापेण प्राचींनानां कृतिं च बहुत्रान्यथारूपां
कुर्वन्ति स्वकल्पितामितिहासकथां चास्तव्यस्तरूपां योजयन्ति। यथा दक्षि-
णप्रान्ते—औरङ्गावादनगरे जोशिहरिकृष्णव्यङ्कटरामस्य श्रीगायत्रीमन्दिर-
स्थविद्याप्रकाशनाम्नि मुद्रणयन्त्रे गुर्जरौदीच्यमंछारामस्य पौत्रेण ज्योतिर्विद्-
व्यङ्कटरामस्य पुत्रेण कमलागर्भोद्भवेन कररसनगेन्दु १७६२ शके लब्धजन्मना
हरिकृष्णनाम्ना युग्मनन्दसप्तेन्दु १७९२ शके प्राचीनमतानि संगृह्य मुद्रिते
बृहज्ज्यौतिषार्णवे प्रश्नस्कन्धस्य तृतीयश्लोकस्य



"यवनाष्टकमध्येऽभूदौरंगजेबाख्यवीर्यवान्।
दिल्लीदेशाधिपः पूर्वं सर्वविद्याविशारदः" ॥

इत्यस्य टीकायां स्वकृतायां "अष्टौ यवनाः के इत्यपेक्षायामाह नामानि आदौ शालिवाहनशके ११११ एकादशोत्तरैकादशशततमे वर्षे श्रीतिमिरलिङ्गनामा भूपतिः तस्य राज्यवर्षाणि ६० ततो बाबरशाहवर्षाणि ५६ हमाउवर्षाणि ५१ ततोऽकबरसाहवर्षाणि ५५ जहांगीरशाहवर्षाणि २२ साहिजहावर्षाणि ३२ अवरंशाहवर्षाणि ४८ बहादुरशाहात्मज आलमगीरबादशाहवर्षाणि ५४ स अवरंगजेबः पूर्वजन्मनि मुकुन्दब्रह्मचारिब्राह्मण इति ज्ञाने कस्यचित्पद्यं अमूलत्वादुपेक्षितं"।

इति सर्वं परस्परमसङ्गतं कपोलकल्पितमेवाऽऽभाति यत एतदनुसारेण अकबरराज्यप्राप्तिशकः = ११११ + ६० + ५६ + ५१ = १२७८ अयमतीवाशुद्धः (रामदैवज्ञवर्णनं विलोक्यम्) एवं सर्वं वाग्जालमात्रमनभिज्ञानां व्यामोहकरमेव।

* सम्प्रति काश्यां वस्तुतः फलितवेदिनः करणागतग्रहगतिकरणक्षमाः श्रीश्यामाचरणसिद्धेश्वरशर्म्मादयो वर्त्तन्ते येषु श्रीश्यामाचरणशर्म्माऽतीवख्यातः स्वविद्यया बहुभिर्नृपतिभिर्हस्त्यश्वयानादिभिः पूजितः सकलजनरञ्जनः सज्जनशिरोमणिरनन्यरामोपासकः परःशतानां छात्राणामध्यापको भोजनाच्छादनादिभिस्तेषां पालकश्च षष्टिवर्षासन्नवयस्को (१) राजति। एतत्तनयश्च सन्नयविनयोपपन्नस्तातादधीतफलितविद्यो मदीयानुग्रहेणाधीतगणित-

---

* सम्प्रति काश्यां ग्रहलाघवानुसारेण पञ्चाङ्गनिर्माता सरयूपारीब्राह्मणो ज्योतिर्विद्रामेश्वरदत्तशर्म्मा राजति। यश्च रामभूधृति १८१३ शके चैत्रशुक्लाष्टम्यां जलयन्त्रनिर्माणावसरे काश्यां भदैनीनामकप्रदेशे राममन्दिरविदारणसमुद्भवदुर्जनसन्दोहोपद्रवे कलङ्कित आसीत्।

टी० १ जन्मसंवत्सरः १८६० निधनसंवत्सरः १९५४

विद्याश्च बहून् छात्रानध्यापयन् स्वविद्यया पितरं चामोदयन् विराजते त्रिंशद्वर्षासन्नवयस्कोऽयोध्यानाथाङ्घ्रिभक्तिधर्म्मा (२) श्रीयुतायोध्यानाथशर्मा ।

श्रीमद्भारतवर्षवर्षविलसत्सद्गोलविद्याविदां
वृत्तं न क्वचिदन्यथा शिथिलया विद्यामया वामया ।
युक्त्याऽवोचमशिष्टवाक्यमखिलं सन्त्यज्य नूनं खिलं
बालानन्ददमत्र किन्तु सुधियः प्रादर्शयं स्वाशयम् ॥
नगसागररत्नभूमिवर्षे गणकानन्दकरीं तरङ्गिणीम् ।
नगसागररत्नभूमिवर्षे समकार्षीत्सुखद सुधाकरः ॥



२ जन्मसंवत्सरः १९२१, ख्रीष्टीयशाके १९२१ महामहोपाध्याय पदवीं लब्धवान् ।
तथा निधनसंवत्सरः १९८३